# अभिज्ञानशकुन्तलम्

महाकवि श्रीकालिदासकृतम् ।

पण्डितकुलपतिना
बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितव्याख्ययान्वितम् ।

तेनैव संस्कृत प्रकाशितञ्च

तृतीयसंस्करणम् ।






कलिकातानगरे
नारायणयन्त्रे
मुद्रितम् ।

इं १८९५ ।

# अभिज्ञानशकुन्तलम्।

## प्रथमोऽङ्कः।

या सृष्टिः स्रष्टुराद्या, वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्,
यामाहुः सर्वबीजप्रकृतिरिति, यया प्राणिनः प्राणवन्तः,
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ (१)

---

(१) इह खलु कविः ग्रन्थपरिसमाप्तेर्निर्विघ्नतार्थम् ईश्वरनामसङ्कीर्त्तनरूपां नान्दीमेव निर्दिशति या सृष्टिरिति। या मूर्त्तिः स्रष्टुर्ब्रह्मणः आद्या सृष्टिः जलमयीत्यर्थः। तथा च मनुः "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्ज्जादौ" इत्यादि। या मूर्त्तिः विधिना वैदिकेन विधानेन हुतं हविः आज्यं वहति अग्निमयीत्यर्थः। जातवेदा देवेभ्यो हव्यं वहत्विति श्रुतेः। या मूर्त्तिः होत्री यजमानरूपा। ये द्वे मूर्त्ती कालम् अहोरात्रस्य तयोरेव प्रवर्त्तनात् सौरं चान्द्रञ्च कालं मासर्त्तुसंवत्सरादिरूपं विधत्तः कुर्व्वतः सूर्य्यचन्द्ररूपे इत्यर्थः। श्रुतेः श्रवणस्य विषयः शब्दो स एव गुणो यस्याः सा तथोक्ता आकाशमयीत्यर्थः। आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः शब्दोऽपि च श्रुतेरिति च। या मूर्त्तिः विश्वं व्याप्य स्थिता। यां मूर्त्तिं सर्व्वबीजानां सर्व्वशस्यानां प्रकृतिः योनिः इति आहुः क्षितिमयीत्यर्थः। तथा च "भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थतेति। यया च मूर्त्त्या प्राणिनः जन्तवः प्राणवन्तः जीवनवन्तः वायुमयी इत्यर्थः। ताभिः पूर्व्वोक्ताभिः प्रत्यक्षाभिः इन्द्रियग्राह्याभिः तनुभिर्मूर्त्तिभिः प्रपन्नः प्रकटितप्रसादः प्रकाशितस्वमहिमेति यावत् ईशः शिवः वो युष्मान् विक्रमादित्यादिनृपान् पण्डितमण्डलीञ्च अवतु रक्षतु। तथा च सूर्य्यो जलं मही वह्निर्वायुराकाशमेव च। दीक्षितो ब्राह्मणः सोम इत्येताः तनवः स्मृता इति विष्णुपुराणात्। स्रग्धरावृत्तम्।

[ (२) नान्द्यन्ते (३) सूत्रधारः ] । अलमतिविस्तरेण ।

[नेपथ्याभिमुखमवलोक्य] । आर्य्ये ! यदि (४) नेपथ्य-विधानमवसितं तदिह आगम्यताम् ।

[नटी प्रविश्य] । अज्ज ! इअम्हि, आणवेदु अज्जो को (५) णिओओ अणुचिट्ठीअदु त्ति ( क ) ।

सूत्र । आर्य्ये ! इयं हि (६) रसभावविशेषदीक्षागुरोः विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत्, अस्याञ्च (७)कालिदासग्रथितवस्तुना नवेन अभिज्ञानशकुन्तलनामधेयेन ( ८ )

---

( क ) आर्य्य ! इयमस्मि, आज्ञापयतु आर्य्यः, को नियोगोऽनुष्ठीयतामिति ।

( २ ) नान्द्यन्ते—विघ्नोपशान्तये आदौ क्रियमाणा आशीर्वचनसंयुक्ता देवद्विज-नृपाणां स्तुतिर्नान्दी तथा च "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देवद्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता ॥"

( ३ ) सूत्रधारः—सूत्रं नाटकीयप्रमुखं वाक्यं धरति यः सः । नाटकीय-कथासूचकः नटप्रधानः पुमान् ।

( ४ ) नेपथ्यविधानं—वेशरचनम् । अध्यवसितं परिसमाप्तं ( अधि+अव+सो+क्तः कर्मणि ) ।

( ५ ) नियोगः—आदेशः ।

( ६ ) रसभावविशेषदीक्षागुरोः—रसाः शृङ्गारादयः भावाः रसबोधका धर्माः रत्यादयः तयोः विशेषः प्रभेदः तस्य दीक्षागुरुः उपदेशकः तस्य तथो-क्तस्य । अभिरूपभूयिष्ठाः—पण्डितबहुलाः । अभिरूपा बुधमनोज्ञयोरित्यमरः । परिषत्—सभा परिषीदन्त्यस्यामिति परि+सद अधिकरणे क्विप् ।

( ७ ) कालिदासग्रथितवस्तुना—कालिदासेन कविना ग्रथितं निबद्धं वस्तु इतिवृत्तम् यस्मिन् तत् तेन ।

( ८ ) अभिज्ञानशकुन्तलनामधेयेन—अभिज्ञायतेऽनेन इति अभिज्ञानं शकुन्तले

नाटकेन उपस्थातव्यमस्माभिः, तत् प्रतिपात्रमाधीयतां यत्नः।

नटी । सुविहिदप्पओअदाए (९) अज्जस्स ण किम्पि परिहाइस्सदि (१०) । (क)

सूत्र । [सस्मितम् ।] आर्य्ये ! कथयामि ते भूतार्थम्(११)।
आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ (१२)

नटी । [सविनयम् ।] एवम्मेदं । अणन्तरकरणिज्जं (१३) दाणिं अज्जो आणवेदु (ख) ।

(क) सुविहितप्रयोगतया आर्य्यस्य न किमपि परिहास्यते ।

(ख) एवमिदम् । अनन्तरकरणीयमिदानीमार्य्य आज्ञापयतु ।

अङ्गुरीयकं तेन ज्ञाता शकुन्तला यत्रेति व्युत्पत्त्या अभिज्ञानशकुन्तलं तत् नामधेयं नाम यस्य तेन । उपस्थातव्यम्—आराधयितव्यम् । नाटकमभिनीय सर्वान् प्रीणयाम इत्यर्थः ।

(९) सुविहितप्रयोगतया—सुविहितः सुशिक्षितः प्रयोगः अभिनयक्रिया येन तस्य भावः तया ।

(१०) परिहास्यते—परिहीनं भविष्यति ।

(११) भूतार्थं—सत्यार्थम् । "युक्ते क्ष्मादावृते भूतम्" इत्यमरः ।

(१२) आपरितोषादिति । विदुषां पण्डितानाम् आपरितोषात् (आङ्योगे पञ्चमी) सन्तोषपर्य्यन्तं प्रयोगविज्ञानम् अभिनयकौशलं साधु उत्कृष्टं न मन्ये न जानामि । शिक्षितानां विज्ञानां भ्रष्टास्म्येवेति कृतनिश्चयमपि चेतः मनः आत्मनि स्वस्मिन् अप्रत्ययम् अविश्वसनीयम् अथवा बलवदिति शिक्षितानामित्यस्य क्रियाविशेषणम् । आर्य्या जातिः ।

(१३) अनन्तरकरणीयम्—अतःपरकर्त्तव्यम् ।

सूत्र । आर्य्ये ! किमन्यदस्याः परिषदः (१४) श्रुतिप्र-मोदहेतोर्गीतात् करणीयमस्ति ?

नटी । अध कदमं उण उदुं अधिकरिअ गाइस्सम्(क) ।

सूत्र । आर्य्ये ! ननु इममेव तावदचिरप्रवृत्तम्(१५)उप-भोगक्षमं (१६) ग्रीष्मसमयमधिकृत्य गीयताम् । सम्प्रति हि

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।

प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ (१७)

नटी । तह ( ख ) [ इति गायति । ]

खणचुम्बिआइं भमरेहिं उह सुउमारकेसरसिहाइं ।

---

( क ) अथ कतमं पुनर्ऋतुमधिकृत्य गास्यामि ।

( ख ) तथा ।

( ग ) क्षणचुम्बितानि भ्रमरैः पश्य सुकुमारकेशरशिखानि ।

---

( १४ ) श्रुतिप्रमोदहेतोः—श्रुतेः श्रवणस्य प्रमोदः आनन्दः तस्य हेतोः श्रवण-प्रीतिसम्पादकादित्यर्थः ।

( १५ ) अचिरप्रवृत्तं—सम्प्रत्येव उपस्थितम् ।

( १६ ) उपभोगक्षमं – शीतवातादिसेवनार्हम् ।

( १७ ) सुभगेति । सुभगः अतिप्रियः सलिलेषु अवगाहः मज्जनं येषु ते तथोक्ताः पाटलस्य तदाख्यस्य कुसुमस्य संसर्गेण सुरभिः सुगन्धिः वनवातः वनवायुः येषु ते तथोक्ताः तथा प्रकृष्टा छाया यस्मिन् प्रदेशे तत् प्रच्छायं तस्मिन् सुलभा अनायासलब्धा निद्रा येषु ते तथोक्ताः तथा परिणामे अवसाने अस्तमनवेलाया-मिति यावत् रमणीयाः मनोरमाः सुखविहारा इति यावत् दिवसाः वर्त्तन्त इति शेषः । ग्रीष्मे हि सलिलावगाहनं शीतसुगन्धिवायुसेवनं छायासु निद्रा दिवावसाने बहिःसञ्चारादिकञ्च सर्वमेव अतीव सुखप्रदमित्यर्थः । आर्य्याजातिः ।

( १८ ) क्षणचुम्बितानीति । क्षणं क्षणे क्षणे अथवा क्षणेन निर्व्यापारस्थित्या

ओदंसअन्ति दयमाणा पमदाओ सिरीसकुसुमाइं (ग)॥(१८)

सूत्र। आर्य्ये! साधु गीतम्। (१९) अहो रागापहृत-चित्तवृत्तिरालिखित इव विभाति सर्वतो रङ्गः। तदि-दानीं कतमं प्रयोगमाश्रित्य(२०)एनमाराधयामः।

नटी। पढ़मं ज्जेव्व अज्जेण आणत्तं अहिण्णाणसउ-न्तलं णाम अउव्वं णाड़अं अहिणीअदु त्ति (क)।

सूत्र। आर्य्ये! सम्यक्(२१) अनुबोधितोऽस्मि। (२२) अस्मिन् क्षणे खलु विस्मृतं मयैतत्। कुतः

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा॥ (२३)

इति निष्क्रान्तौ।

---

अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि॥

(क) ननु प्रथममेव आर्य्येणाज्ञप्तम् अभिज्ञानशकुन्तलं नाम अपूर्वं नाटकम् अभिनीयतामिति।

---

भ्रमरैः चुम्बितानि निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः। सुकु-माराः कोमलाः केशराणां किञ्जल्कानां शिखा येषां तानि शिरीषकुसुमानि प्रमदाः युवतयो दयमानाः सदयाः सत्यः अवतंसयन्ति कर्णभूषणीकुर्वन्ति पश्य "अवतंसः कर्णभूषणम्" इत्यमरः। अतिसौकुमार्य्यात् सदयावचयनम्। उद्गाथाजातिः।

(१९) अहो विस्मये रङ्गः नाट्यसभा रागेण स्वरविशेषेण अपहृता चित्त-वृत्तिर्मनोवृत्तिर्यस्य सः तथोक्तः सन् आलिखितः।

(२०) एनं—रङ्गम्। आराधयामः अनुरञ्जयामः।

(२१) अनुबोधितः—स्मारितः त्वयेति शेषः।

(२२) अस्मिन् क्षणे विस्मृतं मयैतदित्युक्तं तत्र विस्मृतेः कारणमाह।

(२३) तवेति। अतिरंहसा अतीव वेगगामिना सारङ्गेण मृगेण एष राजा

प्रस्तावना । ( २४ )

ततः प्रविशति रथारूढ़: ( २५ ) सशरचापहस्तो

मृगमनुसरन् राजा सूतश्च ।

सूतः । [ राजानं मृगञ्चावलोक्य । ] आयुष्मन् !

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।

मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥ (२६)

राजा । सूत ! (२७) दूरममुना सारङ्गेण वयमाकृष्टाः ।

सोऽयमिदानीमपि ( २८ )

दुष्मन्त इव हारिणा मनोहारिणा चित्ताकर्षकेणेति यावत् तव गीतरागेण गीतस्वरेण अहं प्रसभं बलात् हृतः अपहृतचित्तवृत्तिः अस्मि । नृपतिपक्षे हृतः सुदूरं प्रापितः । पश्यावक्तं कृष्णम् ।

( २४ ) प्रस्तावना—प्रस्तुतोद्भावनम् । तल्लक्षणं यथा "नटो विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥" इति । सा चावावलोगिताख्या यदुक्तं "यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते । प्रयोगे खलु तत् ज्ञेयं नाम्नावलोगितं बुधैः ॥" इति ।

( २५ ) सशरचापहस्तः—शरेण सह वर्त्तमानः सशरः सशरः चापः हस्ते यस्य स तथोक्तः धृतधनुर्वाणः । सूतः—सारथिः ।

(२६) कृष्णसार इति । कृष्णसारे मृगविशेषे तथा अधि अधिगता अधिरोपिता ज्या यस्मिन् तत् तथाभूतं कार्मुकं यस्य तस्मिन् त्वयि चक्षुः नयनं ददत् पातयन् अहं मृगमनुसरतीति तं धृतवराहरूपं मूकदानवम् अनुसरन्तं साक्षात् प्रत्यक्षं पिनाकिनं शूलिनं हरमिव पश्यामि अवलोकयामि । कृष्णसारमनुगच्छन्तं धृतकार्मुकं त्वां विलोक्य धृतकिरातरूपं वराहरूपिणं मूकदानवमनुसरन्तं हरं स्मरामीत्यर्थः ।

( २७ ) दूरमाकृष्टाः—दूरमानीताः ।

( २८ ) इदानीमिति—दूरमाकृष्यापि साम्प्रतमेवं प्रयातीत्यर्थः ।

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥ (२९)

[सविस्मयम्]। कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः (३०) संवृत्तोऽयं मृगः।

सूतः। उद्घातिनी(३१)भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेगः, तेनैष मृगो विप्रकृष्टः(३२)संवृत्तः। सम्प्रति हि समदेशवर्त्ती न ते दुरासदो भविष्यति।

---

(२९) ग्रीवेति। अनुपतति अनुगच्छति स्यन्दने रथे ग्रीवायाः कन्धराया भङ्गेन परिवर्त्तनेन अभिरामं रमणीयं यथा तथा मुहुः पुनः पुनः दत्तदृष्टिः निक्षिप्तनयनः। तथा शरपतनभयात् बाणाघातत्रासात् पश्चादर्द्धं पश्चार्द्धं पश्चार्द्ध पृषोदरादित्वात् तलोपे साधु। तेन देहस्य पश्चाद्भागेन पूर्वकायं देहस्य पूर्वार्द्धं भूयसा बाहुल्येन प्रविष्टः भयात् लाङ्गूलान्तभागं सम्मुखीनचरणद्वयान्तिकमानीत इत्यर्थः। श्रमेण भयात् द्रुतगतिजनितया क्लान्त्या विवृतात् मुखात् भ्रंशिभिः पतद्भिः अर्द्धावलीढैः अर्द्धकवलितैः शष्पैः कीर्णं व्याप्तं वर्त्म पन्थाः यस्य स तथोक्तः सन् उदग्रं प्लुतं यस्य स तथाभूतत्वात् वियति आकाशे बहुतरम् अधिकतरम् उर्व्यां भुवि स्तोकं स्वल्पं प्रयाति गच्छति पश्य। अत्र स्रग्धरावृत्तम्। स्वभावोक्तिरलङ्कारः। स्वभावोक्तिरसौ चारु यथावत् वस्तुवर्णनम्॥" इति। स्रग्धरावृत्तम्।

(३०) प्रयत्नप्रेक्षणीयः—कृच्छ्रनिरीक्षणीयः।

(३१) उद्घातिनी—उद्घातयति पादस्खलनं जनयतीत्युद्घातिनी निम्नोन्नता उन्नतावनतत्वात् पादस्खलनयोग्या। उत्तुङ्गा वा। उत्खातिनीति पाठे तु उत्खननवती विदारवतीत्यर्थः।

(३२) विप्रकृष्टः—दूरवर्त्ती। समदेशवर्त्ती—समतलभूमिवर्त्ती। दुरासदः—दुष्प्रापः।

राजा । तेन हि मुच्यन्तामभीषवः (३३)

सूतः । यथाज्ञापयति आयुष्मान् । [इति भूयो रथवेगं रूपयित्वा । ] आयुष्मन् ! पश्य पश्य । एते हि

१ मुक्तेषु रश्मिषु निरायतपूर्वकायाः
स्वेषामपि प्रसरतां रजसामलङ्घ्याः ।
२ निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते ॥ (३४)

राजा । [सहर्षम्] । नूनमतीत्य (३५) हरिणं हरयो (३६) वर्त्तन्ते । यतः

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।

(३३) अभीषवः—प्रग्रहाः, रश्मयः ।

(३४) मुक्तेष्विति । रश्मिषु प्रग्रहेषु मुक्तेषु शिथिलीकृतेषु सत्सु निरायतः अतिदीर्घः पूर्वकायः देहपूर्वभागः येषां ते तथोक्ताः । प्रसरतां विस्तृतिमापन्नानां स्वेषां स्वखुरोत्थानां रजसां पांशूनामपि अलङ्घ्याः अनतिक्रमणीयाः एतेन वातातिशायी वेगः सूचितः । तथा निष्कम्पाः वेगातिशयात् निश्चलाः चामराणां शिखाः अग्राणि येषां ते तथोक्ताः च्युताः अपगताः कर्णानां भङ्गा अवनतयो येषां ते तथोक्ताः निश्चलोर्द्ध्वकर्णाः ते तव वाजिनः अश्वाः वर्त्मनि पथि धावन्ति नु अथवा तरन्ति प्लवन्ते पश्येति पूर्वेणान्वयः । वसन्ततिलकं वृत्तम् ।

(३५) अतीत्य—अतिक्रम्य ।

(३६) हरयः—अश्वाः । हरिणं—लक्षितं मृगम् ।

(३७) यदालोक इति । रथजवात् रथवेगात् यद्वस्तु आलोके प्रथमदर्शने सूक्ष्मम् अतिदूरतया सूक्ष्मत्वेन प्रतीयमानं तत् सहसा अकस्मादेव विपुलतां स्थूलतां व्रजति प्राप्नोति सामीप्यात् यथावत् दृश्यते इत्यर्थः । यत् वस्तु अर्द्धे अर्द्धभागे

प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोः
न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात्॥ (३७)

सूतः। पश्यैनं व्यापाद्यम्। (३८)

राजा। [शरसन्धानं नाटयति]।

[नेपथ्ये]। भो भो राजन्! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः।

सूतः। [आकर्ण्य अवलोक्य च]। आयुष्मन्! अस्य खलु ते बाणपातपथवर्त्तिनः (३९) कृष्णसारस्य अन्तरायौ तपस्विनौ संवृत्तौ।

राजा। [ससम्भ्रमम्]। प्रगृह्यन्ताम् अभीषवः। (४०)

सूतः। यथाज्ञापयति आयुष्मान् [इति तथा करोति]।

ततः प्रविशति सशिष्यो वैखानसः। (४१)

वैखा। [हस्तमुद्यम्य]। भो भो राजन्! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः। (४२)

---

विच्छिन्नं विभक्तं तत् कृतसन्धानमिव कृतसंयोगमिव भवति। यदपि प्रकृत्या स्वभावतः वक्रं तदपि समरेखं सरलरेखासदृशं भवतीति शेषः। तथा किञ्चि-द्वस्तु क्षणमपि स्वल्पकालमपि व्याप्य मे मम नयनयोः चक्षुषोर्न दूरे न पार्श्वे सन्निहिते वर्त्तते इति शेषः। शिखरिणीवृत्तमेतत्।

(३८) व्यापाद्यम्—वध्यम्।

(३९) बाणपातपथवर्त्तिनः—बाणपातस्य शरपतनस्य पथि वर्त्तते यः सः तस्य। अन्तरायौ—विघ्नभूतौ बाणनिक्षेपनिवारकौ।

(४०) अभीषवः—प्रग्रहाः, रश्मयः।

(४१) वैखानसः—तपस्वी "वैखानसो वनेवासी वानप्रस्थश्च तापसः" इति वैजयन्ती।

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्व बत हरिणकानां जीवितञ्चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते॥
तदाशु कृतसन्धानं प्रतिसंहर सायकम्।
आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि॥ (४३)

राजा। [सप्रणामम्]। एष प्रतिसंहृत एवेति। [यथोक्तं करोति]।

वैखा। [सहर्षम्]। उचितमेवैतत् पुरुवंशप्रभवस्य (४४) नरेन्द्रदीपस्य भवतः।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।
पुत्रमेवंगुणोपेतं चक्रवर्त्तिनमाप्नुहि॥ (४५)

---

(४२) शमप्रधाने आश्रमे हिंसां निवारयन्नाह न खल्विति। तूलराशौ अग्निरिव मृदुनि कोमले अस्मिन् मृगशरीरे अयम् उद्धृतः बाणः न खलु न खलु सन्निपात्यः निक्षेपणीयः। खलु अनुनये सम्भ्रमात् द्विरुक्तिः। तयोर्महद्वैषम्यं दर्शयति क्वेति। बत खेदे हरिणकानाम् अतिकोमलम् अतिचञ्चलं लघुकारणापायीति जीवितं जीवनं क्व निशितः तीक्ष्णः दुःसह इति यावत् निपातः येषां ते तथा वज्रवत् सारो बलं काठिन्यमिति यावत् येषां ते अतिकठिनाः ते तव शराः बाणाश्च क्व। क्वद्वयम् एतयोर्महद्वैषम्यं सूचयति। मालिनीवृत्तम्।

(४३) तदिति। तत् तस्मात् कृतं सन्धानं यस्य तत् धनुषि आहितं सायकं शरम् आशु तूर्णं प्रतिसंहर तूणीरं प्रापयेत्यर्थः। वः युष्माकं शस्त्रम् आर्त्तानां विपन्नानां त्राणाय उद्धाराय अनागसि निरपराधे प्रहर्त्तुं न भवतीति शेषः। पथ्यावक्त्रम्।

(४४) पुरुवंशप्रदीपस्य — पुरुवंशोज्ज्वलस्य पुरुवंशतिलकस्येत्यर्थः।

(४५) जन्मेति। यस्य पुरोः तदाख्यस्य राज्ञः वंशे जन्म तस्य तव इद

इतरोऽपि । [हस्तमुद्यम्य] । सर्वथा चक्रवर्त्तिनं पुत्रमाप्नुहि ।

राजा । [सप्रणामम्] । प्रतिगृहीतं(४६) ब्राह्मणवचः ।

वैखा । राजन्! (४७) समिधाहरणाय प्रस्थिता वयम् । एष च अस्मद्गुरोः कण्वस्य कुलपतेः (४८) साधिदैवत (४९) एव शकुन्तलया (५०) अनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्य्यातिपातः (५१) तदत्र प्रविश्य प्रतिगृह्यतामतिथिसत्कारः । अपि च

धर्म्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ (५२)

---

निवारणमात्रेणैव बाणप्रतिसंहरणं युक्तरूपम् अनुरूपं तादृशवंशोद्भवस्य तव ईदृगाचरणं सर्वथा वंशानुरूपमित्यर्थः । एवंगुणोपेतं भवादृशविनयादिसर्वगुणयुक्तं चक्रवर्त्तिनं मण्डलेश्वरं सार्वभौमं "चक्रवर्त्ती सार्वभौमः" इत्यमरः । पुत्रम् आप्नुहि लभस्व । पथ्यावक्त्रं वृत्तम् ।

(४६) प्रतिगृहीतम् — स्वीकृतं शिरोधार्य्यमिति यावत् ।

(४७) समिधाहरणाय — समिधां यज्ञीयकाष्ठानाम् आहरणाय आनेतुम् ।

(४८) कुलपतेः — कुलपतिलक्षणमाह "मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात् । अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः ॥"

(४९) शकुन्तलया साधिदैवतः — शकुन्तलयैव साधिष्ठातृजनः ।

(५०) अनुमालिनीतीरम् — मालिन्यास्तीरे इति अनुमालिनीतीरं (विभक्त्यर्थे अव्ययीभावः) ।

(५१) कार्य्यातिपातः — कर्मान्तरातिक्रमः ।

(५२) धर्म्या इति । तप एव धनं येषां ते तपोधनाः तपस्विनः तेषां प्रतिहता अपगता विघ्ना यासां तास्तथोक्ताः धर्म्याः धर्मादनपेताः क्रियाः विहितकर्माणि समवलोक्य सम्यक् दृष्ट्वा मौर्व्याः गुणस्य यः किणस्तदाघातजनितः शुष्क-

राजा । अपि (५३) सन्निहितोऽत्र कुलपतिः ?

वैखा । इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय आदिश्य दैवमस्याः प्रतिकूलं(५४) शमयितुं सोमतीर्थं गतः ।

राजा । भवतु, तामेव द्रक्ष्यामि । सा खलु विदित-भक्तिर्मां ( ५५ ) महर्षये निवेदयिष्यति ।

वैखा । साधयाम स्तावदिति । [सशिष्यो निष्क्रान्तः] ।

राजा । सूत ! चोदयाश्वान् पुण्याश्रमदर्शनेनात्मानं पुनीमहे । ( ५६ )

सूतः । यदाज्ञापयति आयुष्मान् [ इति भूयो रथवेगं निरूपयति । ] ( ५७ )

राजा । [ समन्तादवलोक्य । ] सूत ! अकथितोऽपि ज्ञायत एवायम् आभोगः(५८)तपोवनस्य ।

सूतः । कथमिव ।

व्रणः स अङ्कचिह्नं यत्र स तथाभूतः मे भुजः बाहुः कियत् रक्षति इति ज्ञास्यति अनुभविष्यति । तपोधनानां निर्विघ्नं तपश्चरणं दृष्ट्वा आत्मनो भुजवीर्य्यं ज्ञास्यतीत्यर्थः । आर्य्यावृत्तम् ।

( ५३ ) सन्निहितः — उपस्थितः ।

( ५४ ) अस्या इति । अस्याः शकुन्तलायाः प्रतिकूलं विरुद्धं परिणयप्रति-बन्धकमिति भावः ।

( ५५ ) विदितभक्तिः विदिता भक्तिः अनुराग इति यावत् कण्वं प्रति इति भावः । यथा तथोक्तेत्यर्थः ।

( ५६ ) चोदयेति । चोदय प्रेरय चालयेत्यर्थः पुनीमहे पवित्रं कुर्मः ।

( ५७ ) निरूपयति नाटयति ।

( ५८ ) आभोगः परिपूर्णता विस्तारः सीमेति यावत् ।

राजा। किं न पश्यति भवान्? इह हि

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः॥(५९)

अपि च

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति॥(६०)

---

(५९) नीवारा इति। शुकानां पक्षिविशेषाणां कोटरेषु गर्त्तेषु ये अर्भकाः शावकाः तेषां मुखेभ्यः भ्रष्टाः विच्युताः नीवाराः शूकधान्यविशेषाः तरूणाम् अधः तलेषु इत्यर्थः दृश्यन्ते इति शेषः। क्वचित् प्रदेशविशेषे प्रस्निग्धाः तैलाक्ताः उपलाः प्रस्तराः इङ्गुदीफलानि भिन्दन्तीति तथोक्ताः सूच्यन्ते सन्त्यन्ते इङ्गुदीफलपेषणेन तापसास्तैलं निष्पादयन्तीति प्रसिद्धिः। मृगाः हरिणादयः विश्वासः हिंसाद्यात्मकमत्र न केनापि क्रियते इत्येवंरूपः प्रत्ययः तस्य उपगमात् लाभात् अभिन्ना अस्खलिता अचकिता इति भावः मतिः सञ्चारः येषां तथाभूताः सन्तः शब्दं सहन्ते शब्दं श्रुत्वा न पलायन्ते इति भावः। तोयाधाराणां जलाशयानां पन्थानश्च वल्कलानां याः शिखा अग्राणि तासां निष्यन्दरेखाभिः क्षरणधाराभिः अङ्किताः चिह्निताः। एतेनास्य तपोवनाश्रमत्वं सुव्यक्तमेवेति भावः। शार्दूलविक्रीडितं वृत्तं सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणात्।

(६०) कुल्याम्भोभिरिति। पवनेन वायुना चपलैः कुल्यानाम् अल्पसरितां कुल्याल्पा कृत्रिमा सरिदित्यमरः अम्भोभिः सलिलैः शाखिनः वृक्षाः धौतं क्षालितं मूलं तलभागः येषां तथाभूताः। किसलयरुचां पल्लवकान्तीनां रागः लौहित्यम्

सूतः । सर्वम् उपपन्नम् । (६१)

राजा । [स्तोकमन्तरं गत्वा]। आश्रमोपरोधो (६२) माभूत्, तदिहैव रथं स्थापय यावदवतरामि ।

सूतः । धृताः प्रग्रहाः (६३) अवतरतु आयुष्मान् ।

राजा । [अवतीर्य्य आत्मानमवलोक्य च ।] सूत ! विनीतवेशेन ( ६४ ) प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद्गृह्यन्तामाभरणानि धनुश्चेति [सूतस्य अर्पयति]।

[सूतो गृह्णाति]।

राजा । यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये तावत् आर्द्रपृष्ठाः क्रियन्तां वाजिनः । (६५)

सूतः । यथाज्ञापयति आयुष्मान् [इति निष्क्रान्तः]।

राजा । [ परिक्रम्य अवलोक्य च ]। इदमाश्रमपदं

---

आज्यस्य हव्यस्य घृतस्य धूमोद्गमेन धूमसङ्गेनेति भावः भिन्नः वैपरीत्यं गत इत्यर्थः। एते च हरिणशिशवः नष्टाशङ्काः निःशङ्काः सन्तः छिन्नाः दर्भाणां कुशानाम् अङ्कुराः यस्याम् तथाविधायाम् उपवनभुवि अर्वाक् समीपे मन्दमन्दं चरन्ति। एतेनापि अस्य तपोवनत्वं सुस्पष्टमिति भावः। मन्दाक्रान्तावृत्तं मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्ममिति लक्षणात्।

( ६१ ) उपपन्नं युक्तं यथार्थमभिहितमित्यर्थः।

( ६२ ) आश्रमोपरोधः आश्रमबाधा ।

( ६३ ) प्रग्रहाः प्रगृह्यन्ते एभिरिति प्रग्रहाः रश्मयः अश्वावरोधकरज्जुविशेषा इति यावत् ।

( ६४ ) विनीतवेशेन नम्रवेशेन अनुद्धतवेशेनेति यावत् ।

( ६५ ) निवर्त्तिष्ये प्रत्यागमिष्यामि । आर्द्रपृष्ठाः आर्द्राणि जलसिक्तानि पृष्ठानि येषां तथाभूताः । वाजिनः अश्वाः । अश्वान् विश्रामयेति भावः ।

यावत् प्रविशामि। [प्रविश्य प्रवेष्टकेन निमित्तं सूचयित्वा] (६६)। अये! शान्तमिदमाश्रमपदं, स्फुरति च बाहुः कुतः फलमिहास्य। अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र। (६७)

[नेपथ्ये]। इदो इदो पियसहीओ (क)।

राजा। [कर्णं दत्त्वा]। अये! दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते यावदत्र गच्छामि। [परिक्रम्यावलोक्य च]। अये! एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एव अभिवर्त्तन्ते [निरूप्य]। अहो मधुरमासां दर्शनम्। (६८)

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥ (६९)

(क) इत इतः प्रियसख्यौ।

(६६) प्रवेष्टकेन बाहुना दक्षिणेनेति शेषः। भुजबाहू प्रवेष्टो दोरित्यमरः। निमित्तं शुभसूचकं लिङ्गं स्पन्दनमिति भावः। एतच्च वराङ्गनालाभं सूचयति तथा चोक्तम् अद्भुतसागरे। वामेतरभुजस्पन्दो वरस्त्रीलाभसूचक इति।

(६७) स्फुरति स्पन्दते। अस्य बाहुस्पन्दनस्य फलं स्त्रीलाभरूपम्। भवितव्यानाम् अवश्यम्भाविनां विषयाणां द्वाराणि प्राप्तिसूचका उपाया इति भावः।

(६८) दक्षिणेन वृक्षवाटिकां वृक्षवाटिकायाः दक्षिणस्यां दिशीत्यर्थः। एन प्रत्ययान्तेन द्वितीया। आलाप इव कथोपकथनमिव। स्वप्रमाणानुरूपैः स्वावयवपरिमाणयोग्यैरित्यर्थः बालपादपेभ्यः क्षुद्रतरुभ्यः। इत एव अस्यां दिश्येव। अभिवर्त्तन्ते आगच्छन्ति। मधुरं मनोहरम्। दर्शनं दृश्यते इति दर्शनं रूपमित्यर्थः।

(६९) शुद्धान्तेति। इदं शुद्धान्तेषु राजान्तःपुरिकासु दुर्लभं दुष्प्रापं वपुः

यावदेतांश्छायामिमामाश्रित्य प्रतिपालयामीति (७०) [ विलोकयन् स्थितः ] ।

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।

एका । हला सउन्तले ! तत्तोवि तादकस्सस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि, जेण णोमालिआकुसुमपरिपेलवावि तुमं एदाणं आलवालपरिउरणे(७१)णिउत्ता(क) ।

शकु । हला अणसूए ! ण केवलं तादस्स णिओओ(७२) ममावि एदेसु सहोअरसिणेहो । ( ख ) [ इति वृक्षसेचनं नाटयति] ।

---

( क ) अयि शकुन्तले ! त्वत्तोऽपि तातकाश्यपस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषाम् आलवालपरिपूरणे नियुक्ता ।

( ख ) अयि अनसूये ! न केवलं तातस्य नियोगो ममापि एतेषु सहोदरस्नेहः ।

---

शरीरं रूपमित्यर्थः आश्रमवासिनोऽपि जनस्य यदि स्यात् तदा उद्यानलता उपवनवल्ल्यः यत्नवर्द्धिता इति भावः वनलताभिः अयत्नवर्द्धिताभिरिति भावः दूरीकृताः निराकृताः खलु पराजिता एव इत्यर्थः । अत्र पूर्वार्द्धपरार्द्धवाक्ययोरन्योन्यसम्बन्धोऽनुपपद्यमानत्वेन बिम्बानुबिम्बप्रतिपादनात् निदर्शनालङ्कारः । तदुक्तं सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना इति आर्य्यावृत्तं यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् ।

( ७० ) एताः कन्यकाः । प्रतिपालयामि प्रतीक्षे ।

( ७१ ) नवमालिकेति । नवमालिकायाः कुसुमवत् परिपेलवा सुकोमला । आलवालपरिपूरणे आलवालस्य वृक्षमूलवेष्टनजलाधारस्य परिपूरणे सम्यक् पूर्णकरणे इत्यर्थः ।

( ७२ ) नियोग आदेशः ।

द्वितीया । सहि सउन्तले ! उदअं लम्भिदा एदे गिह्म-आलकुसुमदाइणो अस्समरुक्खआ । दाणिं अदिक्कन्तकुसुम-समये वि रुक्खके सिञ्चह्म, तेण अणहिसन्धिगुरुओ (७३) धम्मो भविस्सदि ( क ) ।

शकु । हला पिअम्वदे ! रमणिज्जं मन्तेसि (७४)(ख) । [इति भूयो वृक्षसेचनं नाटयति] ।

राजा । [निर्वर्ण्य आत्मगतम्] । कथमियं सा कण्व-दुहिता शकुन्तला । [सविस्मयम्] । अहो ! असाधुदर्शी खलु भगवान् कण्वः । य इमामाश्रमधर्मे (७५) नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपुः
तपःक्षमं साधयितुं य इच्छति ।

---

( क ) सखि शकुन्तले ! उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रम-वृक्षाः । इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः तेन अनभिसन्धि-गुरुको धर्मो भविष्यति ।

( ख ) अयि प्रियंवदे ! रमणीयं मन्त्रयसि ।

---

( ७३ ) लम्भिता प्रापिता । अनभिसन्धिगुरुकः नास्ति अभिसन्धिः फलकामना यस्मिन् तथाभूतः अतएव गुरुरेव गुरुकः महान् । अभिसंहितो धर्मः फलप्राप्त्या क्षीयते, अनभिसंहितस्तु अक्षय इत्यतो महत्त्वमिति भावः ।

( ७४ ) रमणीयं साधु यथातथा मन्त्रयसि कथयसि ।

( ७५ ) असाधुदर्शी असम्यग्दर्शी अविवेचक इति भावः । आश्रमधर्मे तपो-वनविहिते कार्य्ये ।

( ७६ ) इदमिति । अव्याजेन व्याजं छलं विना मनोहरं स्वभावरम्यमित्यर्थः; इदं वपुः शरीरं तपःक्षमं तपसा क्षमः क्षान्तिः श्रमो यस्य तथाविधं तपस्याक्लेश-

ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ (७६)

भवतु । पादपान्तरित एव विश्वस्तां (७७) तावदेतां पश्यामि [इति तथा करोति] ।

शकु । हला अणसूए । अदिपिणद्धेण (७८) वक्कलेण पियम्बदाए दढ़ं पीड़िदाह्मि, ता सिढ़िलेहि दाव णं (क) ।

अन । [शिथिलयति] ।

प्रियं । [सहासम्] । एत्थ दाव पओहरवित्थारहेतुअं अत्तणो जोव्वणारम्भं उवालह(७९)मं किं उवालहसि(ख) ।

राजा । सम्यक् इयमाह ।

---

(क) अयि अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया दृढ़ं पीड़िताह्मि, तत् शिथिलय तावदेनत् ।

(ख) अत्र तावत् पयोधरविस्तारहेतुकम् आत्मनो यौवनारम्भमुपालभस्व मां किम् उपालभसे ।

---

निरतमित्यर्थः साधयितुं कर्त्तुं य इच्छति । किल निश्चितम् । स ऋषिः नीलोत्पलस्य पत्रधारया दलाग्रभागेन शमीलतां शम्याख्यं तरुमित्यर्थः छेत्तुं व्यवस्यति ध्रुवम् उदयुङ्क्ते खलु । अत्र यत्तच्छब्दयोरभेदेनान्वयस्य असम्भवेन विम्ब-प्रतिविम्बभावबोधनात् निदर्शनालङ्कारः । वंशस्थं वृत्तं जतौ तु वंशस्थमुदीरितं जराविति तल्लक्षणात् ।

(७७) पादपान्तरितः पादपैस्तरुभिः अन्तरितः व्यवहितः । विश्वस्तां निःशङ्कामित्यर्थः ।

(७८) अतिपिनद्धेन दृढ़ं बद्धेन त्यर्थः ।

(७९) पयोधरेति पयोधरयोः स्तनयोः विस्तारस्य वृद्धेः हेतुरेव हेतुकः तम् । उपालभस्व तिरस्कुरु ।

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥ (८०)

अथवा । काममननुरूपमपि अस्या (८१) वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ? ॥ (८२)

---

( ८० ) इदमिति । इदम् अस्या अभिनवं नवयौवनमित्यर्थः वपुः स्कन्धदेशे उपहितः अर्पितः सूक्ष्मग्रन्थिर्यस्य तेन स्तनयुगस्य परिणाहं विशालतां परिणाहो विशालता इत्यमरः आच्छादयतीति तथोक्तेन वल्कलेन वृक्षत्वचा पाण्डुपत्राणां परिणतपत्राणाम् उदरेण अभ्यन्तरेण पिनद्धं बद्धं वेष्टितमित्यर्थः कुसुममिव स्वां शोभां न पुष्यति ? न धत्ते ? अपि तु पुष्यत्येव इत्यर्थः इति काका व्यज्यते । पूर्णोपमालङ्कारः उक्तञ्च साम्यं वाच्यम् अवैधर्म्यं वाक्यैक्ये उपमा द्वयोरिति सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च । उपमेयञ्चोपमानं भवेद्‌ वाच्यमिति । मालिनीवृत्तं न न म य य युतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ।

( ८१ ) कामं सम्यग् । अननुरूपमपि अयुक्तमपि ।

( ८२ ) सरसिजमिति । सरसिजं कमलं शैवलेन जलनील्या जलनीली तु शैवालं शैवलम् इत्यमरः । अनुविद्धम् आवृतमपि रम्यं मनोहरम् । हिमांशोः चन्द्रस्य लक्ष्म कलङ्कः मलिनमपि लक्ष्मीं श्रियं तनोति विस्तारयति । इयं तन्वी कृशाङ्गी शकुन्तला वल्कलेनापि अधिकमनोज्ञा अधिकमनोहारिणी । हि तथाहि मधुराणाम् आकृतीनाम् अवयवानां मण्डनं भूषणं किमिव न सर्वमेव वस्तु मण्डनं भवति इत्यर्थः । अत्र पादत्रयवाक्यानां समानधर्मतया बिम्बानुबिम्बभाव-

अपि च

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति।
विकचसरसिजाया: स्तोकनिर्मुक्तकण्ठं
निजमिव कमलिन्या: कर्कशं वृन्तजालम्॥ (८३)

शकु। [अग्रतोऽवलोक्य]। सहीओ एस वादेरिदपल्लवा-ङ्गुलिहिं किम्पि वाहरेदि विअ मं चूअरुक्खओ, ता जाव णं सम्भावेमि (क)। (८४) [इति तथा करोति]।

प्रियं। हला सउन्तले! इध ज्जेव्व मुहुत्तअं चिट्ठ (ख)।

(क) सख्यौ एष वातेरितपल्लवाङ्गुलीभि: किमपि व्याहरतीव मां चूतवृक्ष: तद्यावदेनं सम्भावयामि।

(ख) अयि शकुन्तले! इहैव मुहूर्त्तं तिष्ठ।

पादनात् दृष्टान्तालङ्कार: स च सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासेन सङ्कीर्य्यते उक्तञ्च दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुन: प्रतिबिम्बनमिति सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति। मालिनीवृत्तम्।

(८३) कठिनमिति। मृगाक्ष्या मृगनयनाया: कठिनमपि कान्तरूपं मनोज्ञरूपं वल्कलं विकचसरसिजाया: प्रफुल्लकमलाया: कमलिन्या: स्तोकम् अल्पं यथा तथा निर्मुक्त: तोयोपरि उत्थित: कण्ठो यस्य तथाविधं कर्कशं कठिनं निजं स्वीयं वृन्तजालमिव मनसि स्वल्पमपि अणुमपि रुचिभङ्गम् अप्रीतिमित्यर्थ: न आदधाति न जनयति। उपमालङ्कार:। मालिनीवृत्तम्।

(८४) वातेरितेति। वातेरिता वायुकम्पिता पल्लवा एव अङ्गुल्य: ताभि:। व्याहरतीव आलपतीव। सम्भावयामि अभिनन्दामि।

शकु । किंणिमित्तं ? (क) ।

प्रिय । तए समीवट्ठिदाए लदासणाधो (८५) विश्र श्रश्रं चूअरुक्खश्रो परिहादि (ख) ।

शकु । श्रदो ज्जेव्व तुमं पिअम्बदत्ति(८६) भणीश्रसि (ग) ।

राजा । अवितथमाह (८७) प्रियंवदा । तथा ह्यस्याः
अधरः किसलयरागः, कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ (८८)

अन । हला सउन्तले ! इअं सयम्बरवहू सहआरस्स तुए किदणामहेआ वणदोसिणी (८९) त्ति णोमालिआ णं विसुमरिदासि ? (घ) ।

---

(क) किंनिमित्तम् ।

(ख) त्वया समीपस्थितया लतासनाथ इव अयं चूतवृक्षः प्रतिभाति ।

(ग) अतएव त्वं प्रियंवदेति भण्यसे ।

(घ) अयि शकुन्तले ! इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनतोषिणीति नवमालिका एनां विस्मृतासि ?

---

(८५) लतासनाथः लतासहचरः ।

(८६) प्रियंवदेति प्रियं वदतीति तथोक्ता ।

(८७) अवितथं सत्यम् ।

(८८) अधर इति । अधरः दन्तच्छदः किसलयस्येव रागो लौहित्यं यस्य तथाभूतः । बाहू कोमलविटपं मृदीं शाखाम् अनुकुरुत इति तथोक्तौ । अङ्गेषु कुसुममिव लोभनीयं स्पृहणीयं द्रष्टुमिति भावः यौवनं तारुण्यं नववयोजं सौष्ठवमित्यर्थः सन्नद्धं सम्बद्धम् । आर्य्यावृत्तम् । उपमालङ्कारः ।

(८९) स्वयंवरवधूः स्वयं वृणोति या सा स्वयंवरा सा चासौ वधूश्चेति सादृश्यो

शकु। तदो अत्ताणं पि विसुमरिस्सं (क)। [लता-मुपेत्य अवलोक्य च]। हला रमणीओ क्खु कालो इमस्स पादवमिहुणस्स रदिअरो संवुत्तो, जेण इयं णवकुसुम-जोव्वणा णोमालिआ, अअं पि बद्धफलदाए उवभोअक्खमो (९०) सहआरो (ख)। [इति पश्यन्ती तिष्ठति]।

प्रियं। [सस्मितम्]। अणसूए! जाणासि किं णिमित्तं सउन्तला वणदोसिणीं अदिमेत्तं पेक्खदि? त्ति (ग)।

अन। ण क्खु विभावेमि, ता कधेहि मे (घ)।

प्रियं। जह वणदोसिणी अणुरूवेण पादवेण सङ्गदा, तह अहं पि अत्तणो अणुरूवं वरं लहेअं त्ति (ङ)।

---

(क) तदा आत्मानमपि विस्मरिष्यामि।

(ख) अयि रमणीयः खलु कालोऽस्य पादपमिथुनस्य रतिकरः संवृत्तः येन इयं नवकुसुमयौवना नवमालिका अयमपि बद्धफलतया उपभोगक्षमः सहकारः।

(ग) अनसूये! जानासि किं निमित्तं शकुन्तला वनतोषिणीम् अतिमात्रं प्रेक्षते इति।

(घ) न खलु विभावयामि, तत् कथय मे।

(ङ) यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता, तथा अहमपि आत्मनोऽनुरूपं वरं लभेयम् इति।

---

स्वयंकृताश्लेषेण वधूरिव इत्यर्थः। कृतनामधेया कृतं नामधेयं यस्याः तथा। वनेति वनं तोषयति आनन्दयतीति तथोक्ता।

(९०) पादपमिथुनस्य तरुयुगलस्य तरुलतयोरित्यर्थः रतिकरः अनुराग-वर्द्धकः। नवेति नवानि कुसुमानि इव यौवनानि यस्याः तथाभूता। बद्धफलतया फलपूर्णतया सुरतरूपफलदानक्षमतया अन्यत्र बद्धफललाभेन। उपभोगक्षमः सम्भोगयोग्यः। अन्यत्र सेवनीयः।

शकु । एस दे अत्तणो चित्तगदो (८१) मणोहरो (क) । [इति कलसमावर्जयति] ।

अन । हला सउन्तले ! इअं तादकस्सेण तुमं विअ सह-त्थेण सम्बड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि ? (ख) ।

शकु । तदो अत्ताणं पि विसुमरिस्सं ( ग ) । ( ८२ ) [ लतामुपेत्य अवलोक्य च सहर्षम् ] । अच्चरीअं अच्चरीअं । पिअम्बदे ! पिअं दे णिवेदेमि (घ) ।

प्रियं । सहि ! किं मे पिअं ? (ङ) ।

शकु । असमए (८३) क्खु एसा आमूलादो मुउलिदा माहवीलदा ( च ) ।

---

(क) एष ते आत्मनश्चित्तगतो मनोरथः ।

(ख) अयि शकुन्तले ! इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत् कथमिमां विस्मृतासि ?

(ग) तदा आत्मानमपि विस्मरिष्यामि ।

(घ) आश्चर्यम् आश्चर्यम् । प्रियंवदे ! प्रियं ते निवेदयामि ।

(ङ) सखि ! किं मे प्रियम् ?

(च) असमये खलु एषा आमूलान्मुकुलिता माधवीलता ।

---

(८१) चित्तगतः मनोगतः मनोरथः अभिलाषः अहम् अनुरूपं वरं लभेयम् इत्येवंरूप इति भावः ।

(८२) आत्मानमिति । आत्मानमपि विस्मरिष्यामि आत्मनः प्रियाप्रियस्मरणमिव अस्याः शुभाशुभविषये मम स्मरणमस्तीति भावः ।

(८३) असमये अकाले वसन्तापगमे इत्यर्थः ।

उभे। [सत्वरमुपगम्य। सहि! सच्चं सच्चं? (क)।

शकु। सच्चं किं ण पेक्खध? (ख)।

प्रियं। [सहर्षं निरूप्य]। सहि! तेण हि पड़िप्पिअं (९४) दे णिवेदेमि (ग)।

शकु। किं मे पड़िप्पिअं (घ)

प्रियं। आसस्पाणिग्गहणासि तुमं (९५) (ङ)

शकु। [सासूयमिव]। एस दे अत्तणो चित्तगदो मणो-रहो, ता ण दे वअणं सुणिस्सम् (च)।

प्रियं। सहि! ण क्खु परिहासेण भणामि, सुदं मए तादकस्सस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति (छ)। (९६)

---

(क) सखि! सत्यं सत्यम्?

(ख) सत्यं किं न प्रेक्षेथे?

(ग) सखि! तेन हि प्रतिप्रियं ते निवेदयामि।

(घ) किं मे प्रतिप्रियम्?

(ङ) आसन्नपाणिग्रहणासि त्वम्।

(च) एष ते आत्मनश्चित्तगतो, मनोरथः, तत् न ते वचनं श्रोष्यामि।

(छ) सखि! न खलु परिहासेन भणामि, श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदं निमित्तमिति।

---

(९४) प्रतिप्रियम् अनुरूपं प्रियम्।

(९५) आसन्नेति। आसन्नं सन्निहितम् अविलम्बभावि इत्यर्थः पाणिग्रहणं परिणयः यस्याः तथोक्ता।

(९६) कल्याणसूचकमिति। कल्याणं शुभं पाणिग्रहणरूपं सूचयति व्यनक्तीति तथाभूतं निमित्तं लक्षणम्। पितुः कण्वस्यायमादेशः यत् यदा माधवीलताया

अन। हला पिअंवदे ! अदो ज्जेव्व ससिणेहा सउन्तला माहवीलदां सिञ्चदि (क)।

शकु। जदो बहिणी मे भोदि तदो किं त्ति ण सिञ्चेमि (ख)। [इति कलसमावर्जयति]। (९७)

राजा। अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत्? अथवा कृतं सन्देहेन (९८)।

असंशयं क्षत्रपरिग्रहक्षमा, यदार्य्यमस्यामभिलाषि मे मन:।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्त:करणप्रवृत्तय:॥ (९९)

तथापि तत्त्वत एवैनामुपलप्स्ये। (१००)

---

(क) अयि प्रियंवदे ! अतएव सस्नेहा शकुन्तला माधवीलतां सिञ्चति।

(ख) यतो भगिनी मे भवति तत: किमिति न सिञ्चामि।

---

असमये कुसुमागम: स्यात् तदा शकुन्तलाया: परिणयोऽचिरात् सम्पत्स्यत इति निष्कर्ष:।

(९७) आवर्जयति अवनमयति।

(९८) कुलपते: कुलानाम् ऋषिसङ्घानां पति: अन्नदानविद्यादानाभ्यां पालक इति भाव: तस्य। असवर्णक्षेत्रसम्भवा असवर्णं ब्राह्मणेतरमित्यर्थ: सत् क्षेत्रं पत्नी क्षेत्रभूता स्मृता नारी वीजभूत: स्मृत: पुमानिति शास्त्रात् तत्सम्भवा तदुत्पन्ना। सन्देहेन संशयेन कृतम् अलं संशयो निरर्थक इत्यर्थ:।

(९९) असंशयमिति। इयम् असंशयं निश्चयेनेत्यर्थ: क्षत्रस्य क्षत्रियजाते: परिग्रहक्षमा ग्रहणयोग्या, यत् यस्मात् मे मन: आर्य्यं साधु निर्दोषमिति यावत् मन: अस्यां कन्यायाम् अभिलाषि आकाङ्क्षि। कथं त्वया एवं सिद्धान्तितमित्या शङ्क्याह। सतामिति सतां सज्जनानाम् अन्त:करणस्य मनस: प्रवृत्तय: प्रवर्त्तनानि सन्देहपदेषु संशयितेषु इत्यर्थ: वस्तुषु विषयेषु प्रमाणं हि उपादेयत्वज्ञानकारणान्येव इत्यर्थ:। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कार:। वंशस्थं वृत्तम्।

(१००) तत्त्वत: स्वरूपत इत्यर्थ:। उपलप्स्ये ज्ञास्यामि।

शकु । [ससम्भ्रमम्] । अम्मो सलिलसेअसम्भमुग्गदो णोमा-लिअं उज्झिअ वअणं मे महुअरो अहिवट्टदि (क) ।

[इति भ्रमरवाधां नाटयति] ।

राजा । [सस्पृहं विलोक्य] । साधु बाधनमपि (१०१) रमणीयमस्याः ।

यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना ।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् ॥ (१०२)

अपि च [सासूयमिव] ।

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं,
वयं तत्त्वान्वेषात् मधुकर ! हतास्त्वं खलु कृती ॥ (१०३)

---

(क) अहो सलिलसेकसम्भ्रमोद्गतो नवमालिकाम् उज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते ।

---

(१०१) बाधनं भ्रमरनिराकरणम् ।

(१०२) यत इति । यतः यतः यस्या यस्यां दिशि षट्चरणः भ्रमरः अभिवर्त्तते अभिधावति, ततस्ततः तस्यां तस्यां दिशि प्रेरित चालिते वामे सुन्दरे लोचने यया तथोक्ता तथा विवर्त्तिते सावीकृते भ्रुवौ यया तथाविधा सती इयं कन्यका अकामापि भयात् अद्य दृष्टिविभ्रमं शिक्षते । हिशब्दः पादपूरणे । वंशस्थं वृत्तम् ।

(१०३) चलेति । हे मधुकर ! करं पाणिं व्याधून्वत्याः बाधनार्थम्

अपि च

लीलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमा-
माभुग्नेन त्रिवर्त्तिना वलिमता मध्येन कम्प्रस्तनी ।
हस्ताग्रं विधुनोति पल्लवनिभं, शीत्कारभिन्नाधरा,
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी ॥(१०४

प्राकृ । हला ! परित्ताअध परित्ताअध मं इमिणा दुट्ठ-महुअरेण अहिहूअमाणं (क) । (१०५)

---

(क) अयि ! परित्रायध्वं परित्रायध्वं मामनेन दुष्टमधुकरेण अभिभूयमानाम्।

---

इतस्ततो विक्षिपन्त्याः अस्या इति शेषः चलौ अपाङ्गौ नेत्रप्रान्तौ यस्यास्तथोक्तां वेपथुमतीं कम्पमानां दृष्टिं बहुशः पुनः पुनः स्पृशसि, रहस्यं गोप्यम् आख्याति कथयतीति तथोक्त इव कर्णान्तिकचरः कर्णसमीपचरः सन् मृदु यथा तथा स्वनसि गुञ्जसि तथा रतिसर्वस्वं सुरतसर्वधनम् अधरं दन्तच्छदं पिबसि चुम्बसि, अतः त्वं कृती खलु कृतार्थ एव, वयं तत्त्वान्वेषात् तत्त्वस्य कस्येयं कन्या का चेयं परिणेया न वेति तथ्यस्य अन्वेषात् अनुसन्धानात् हताः वञ्चिता इति यावत् विधात्रेति शेषः। अत्र त्वं कृतार्थः नाहमिति उपमानस्याधिक्यात् व्यतिरेकालङ्कारः, उक्तञ्च दर्पणे आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति। शिखरिणी वृत्तम्। रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात्।

(१०४) लीलामिति। इयं बाला भ्रुवौ लते इव तयोर्विभ्रमेण सह वर्त्तमाना ताम् इतस्ततः लीलां चपलां दृष्टिं वितनुते विक्षिपति, आभुग्नेन ईषद्वक्रेण वलिमता त्रिवलियुता मध्येन विवर्त्तिता कम्रौ कमनीयौ स्पृहणीयौ इत्यर्थः स्तनौ यस्यास्तादृशी कम्प्रस्तनीति पाठे कम्पमानस्तनीत्यर्थः तथा शीत्कारेण भिन्नः विश्लिष्टः अधरो यस्यास्तथाभूता सती पल्लवनिभं किसलयसदृशं हस्ताग्रं विधुनोति कम्पयति। भ्रमरस्य अभिलङ्घनात् बाधनात् या भीः भयं तया हेतुना वाद्यैः विना नर्त्तकी जाता। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः तदुक्तं हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति। शार्दूलविक्रीडितं वृत्तम्।

(१०५) अभिभूयमानां बाध्यमानाम् ।

उभे। [सस्मितम्]। का अम्हे परित्ताणे, एसं दाव दुस्सन्तं अक्कन्द (१०६) अदो राअरक्खिदाइं तवोवणाइं (क)।

राजा। अवसरः खलु अयम् अस्माकमात्मानं दर्शयितुम्। न भेतव्यं [इत्यर्द्धोक्ते स्वगतम्]। एवं हि राजाहमस्मीति परिज्ञानं भविष्यति, भवतु अतिथिसमाचारम् (१०७) एवावलम्बिष्ये।

शकु। ण एसो दुव्विणीदो विरमदि, ता अस्सदो गमिस्सं। [पदान्तरे सदृष्टिक्षेपम्]। हद्धी! हद्धी! कधं इदो वि मं अणुसरदि, ता परित्ताअध मं (ख)।

राजा। [सत्वरमुपगम्य]। आः!

क: पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यकासु॥ (१०८)

---

(क) का वयं परित्राणे, अत्र तावत् दुष्मन्तमाक्रन्द, यतो राजरक्षितानि तपोवनानि।

(ख) न एष दुर्विनीतो विरमति, तदन्यतो गमिष्यामि। हा धिक्! हा धिक्! कथमितोऽपि मामनुसरति, तत् परित्रायध्वं माम्।

---

(१०६) आक्रन्द आह्वय।

(१०७) अतिथिसमाचारम् अतिथिः आगन्तुक उदासीन इत्यर्थः तस्य समः सदृश आचारः व्यवहारः तम्।

(१०८) क इति। दुर्विनीतानां दुष्टानां शासितरि दण्डयितरि पौरवे पुरुवंश्ये राजनि वसुमतीं पृथ्वीं शासति पालयति सति कोऽयं मुग्धासु बालासु तपस्विकन्यकासु अविनयम् अत्याचारम् आचरति करोति? आर्य्याजातिः।

सर्वा राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ताः।

सख्यौ। अज्ज! ण किम्पि अच्चाहिदं (१०९) किन्तु, क्खु, इयं पिअसही दुट्टमहुअरेण आउलीकिअमाणा कादरी-भूदा (क)। [इति शकुन्तलां दर्शयतः]

राजा। [शकुन्तलामुपेत्य]। अयि! तपो वर्द्धते?

शकु। [ससाध्वसावनतमुखी तिष्ठति]।

अन। दाणिं अदिधिविसेसलाहेण (ख)।

प्रियं। साअदं अज्जस्स? हला सउन्तले! गच्छ, उड़-आदो फलमिस्सं अग्घभाअणं (११०) उवहर, इदम्पि पादो-दअं भविस्सदि (ग)। [इति घटं दर्शयति]।

राजा। भवतीनां सूनृतयैव वाचा कृतमातिथ्यम्।

अन। इमस्सिं दाव पच्छाअसीदलाए सत्तवण्णवेदिआए (१११) उवविसिअ अज्जो परिस्समं अवणेदु (घ)।

---

(क) आर्य्य! न किमपि अत्याहितम्, किन्तु खलु इयं प्रियसखी दुष्टमधुकरेण आकुलीक्रियमाणा कातरीभूता।

(ख) इदानीमतिथिविशेषलाभेन।

(ग) स्वागतमार्य्यस्य? अयि शकुन्तले! गच्छ, उटजात् फलमिश्रमर्घ्यभाजनमुपहर, इदमपि पादोदकं भविष्यति।

(घ) अस्यां तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामुपविश्य आर्य्यः परिश्रममपनयतु।

(१०९) अत्याहितम् अविनयम्।

(११०) अर्घ्यभाजनम् अर्घ्यपात्रम्। सूनृतया—मधुरप्रियया।

(१११) प्रच्छायेति प्रकृष्टा छाया यस्यास्तथोक्ता अतएव शीतला तस्याम्। सप्तपर्णवेदिकायां विषमच्छदमूलस्थचतुरस्रभूम्यामित्यर्थः।

राजा । नूनं यूयमप्यनेन धर्मकर्मणा परिश्रान्ताः, तन्मुहूर्त्तमुपविशत ।

प्रियं । [जनान्तिकम्] । हला सउन्तले ! उइदं णो अदिधिपज्जुवासणं, ता एहि उवविसह्म (क) । [इति सर्वा उपविशन्ति] ।

शकु । [आत्मगतम्] । कधं इमं जणं पेक्खिअ तवोवणवि- रोहिणो विआरस्स गमणीयाह्मि (११२) संवुत्ता ? (ख)

राजा । [सर्वा अवलोक्य] । अहो समानवयोरूपरमणीयं सौहार्द्दम् (११३) भवतीनाम् ।

प्रियं । [जनान्तिकम्] । हला अणसूए ! को णु क्खु एसो दुरवगाहगम्भीराकिदी महुरं आलवन्तो पहुत्तदाक्खिण्णं वित्थारेदि ? (ग) । (११४)

---

(क) अयि शकुन्तले ! उचितं नोऽतिथिपर्य्युपासनं, तदेहि उपविशामः ।

(ख) कथमिमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ?

(ग) अयि अनसूये ! को नु खलु एष दुरवगाहगम्भीराकृतिर्मधुरमालपन् प्रभुत्वदाक्षिण्यं विस्तारयति ?

(११२) तपोवनविरोधिन इति तपोवनस्य आश्रमस्य विरोधिनः विरुद्धस्य विकारस्य विकृतभावस्य कामानुरागस्येति भावः । कर्त्तरि षष्ठी । गमनीया अभिभवनीयेति यावत् ।

(१०३) सौहार्द्दं सख्यम् ।

(११४) दुरवगाहेति । दुरवगाहा दुष्प्रवेशा दुर्बोधभावेत्यर्थः गम्भीरा धीरा आकृतिर्यस्य तथाभूतः । प्रभुत्वेति प्रभुत्वं प्रभावं दुर्विनीतशासनसामर्थ्यमिति

अन । हला ! ममावि अत्थि कोदूहलं, ता पुच्छिस्सं दाव णं । [प्रकाशम्] । अज्जस्स महुरालावजणिदो वीसम्भो मं आलावेदि, कदमो राएसिवंसो अलङ्करीअदि अज्जेण, कदमो वा देसो विरहपज्जुस्सुओ (११५) करीअदि, किंणिमित्तं वा अज्जेण सुउमारेण तवोवणगमणपरिस्समे अप्पा उवणीदो ? त्ति (क) ।

शकु । हिअअ ! मा उत्तम्म (११६) जं तुए चिन्तिदं तं अणसूआ मन्तेदि (ख) ।

राजा । [स्वगतम्] । कथमिदानीमात्मानं निवेदयामि, कथं वा आत्मनः परिहारं (११७) करोमि, भवतु एवं तावत् । [प्रकाशम्] । भवति ! वेदविदस्मि राज्ञः पौरवस्य नगरधर्मा-

(क) अयि ! ममाप्यस्ति कौतूहलं, तत् प्रक्ष्यामि तावदेनम्। आर्य्यस्य मधुरालापजनितो विश्रम्भो मालापयति, कतमो राजर्षिवंशोऽलङ्क्रियते आर्य्येण, कतमो वा देशो विरहपर्य्युत्सुकः क्रियते, किंनिमित्तं वा आर्य्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मा उपनीत इति ।

(ख) हृदय ! मा उत्ताम्य, यत्त्वया चिन्तितं, तदनसूया मन्त्रयति ।

भावः। दाक्षिण्यम् औदार्य्यं महत्त्वमिति यावत् अस्मदाश्वसनेनेति भावः तयोः समाहारः तत् विस्तारयति प्रकटयति इत्यर्थः ।

( ११५ ) विश्रम्भः विश्वासः यतोऽयं मधुरमालपति अतोऽयं सज्जन इति प्रत्यय इति यावत् । विरहपर्य्युत्सुकः विरहोत्कण्ठितः ।

( ११६ ) मा उत्ताम्य उत्कण्ठितं मा भवेत्यर्थः ।

( ११७ ) परिहारं गोपनम् ।

धिकारे नियुक्तः, पुण्याश्रमदर्शनप्रसङ्गेन धर्मारण्यमिदमायातः।

अन। अज्ज सणाधा धम्मआरिणो (क)

शकु। [शृङ्गारलज्जां नाटयति]।

सख्यौ। [उभयोराकारं विदित्वा]। हला सउन्तले! जइ अज्ज तादो इह सण्णिहिदो भवे (ख)।

शकु। तदो किं भवे? (ग)।

सख्यौ। तदो जीविदसव्वस्सेणावि (११८) इमं अदिधिविसेसं कदत्थं करेदि (घ)।

शकु। [सकृतककोपम्] (११९)। अवेध तुम्हे किम्पि हिअए कदुए मन्तेध ण वो वअणं सुणिस्सम् (ङ)।

राजा। वयमपि भवत्योः सखीगतं किञ्चित् पृच्छामः।

सख्यौ। अज्ज! अणुग्गहेवि अब्भत्थणा? (च)। (१२०)

(क) अद्य सनाथा धर्मचारिणः।

(ख) अयि शकुन्तले! यदि अद्य तात इह सन्निहितो भवेत्?

(ग) तदा किं भवेत्?

(घ) तदा जीवितसर्वस्वेनापि इममतिथिविशेषं कृतार्थं कुर्य्यात्।

(ङ) अपेत यूयं, किमपि हृदये कृत्वा मन्त्रयध्वे, न वो वचनं श्रोष्यामि।

(च) आर्य्य! अनुग्रहेऽप्यभ्यर्थना?

(११८) जीवितसर्वस्वेन प्राणाधिकया शकुन्तलया इत्यर्थः।

(११९) सकृतककोपं कृतकेन कृत्रिमेण कोपेन सह वर्त्तमानं तत् यथा तथा।

(१२०) अनुग्रहेऽपि अस्मासु भवादृशां प्रश्नः अनुग्रह एव तत्रापि अभ्यर्थना अनुरोधः विश्रब्धं पृच्छतामिति भावः।

राजा । तत्र भवान् कण्वः शाश्वते ब्रह्मणि (१२१) वर्त्तते इयञ्च वः सखी तस्यात्मजा ; कथमेतत् ?

अन । सुणादु अज्जो, अत्थि कोसिओ (१२२) त्ति गोत्तणामहेओ महाप्पहावो राएसी (क) ।

राजा । स खलु भगवान् कौशिकः ।

अन । तं सहीए पहवं अवगच्छ, उज्झिदाए (१२३) सरीरसंवड्ढणादिहिं उण तादकस्सो बि एदाए पिदा (ख) ।

राजा । उज्झितशब्देन जनितं नः कुतूहलं, तदामूलाच्छ्रोतुमिच्छामि ।

अन । सुणादु अज्जो, पुरा किल तस्स राएसिणो उग्गे तवसि वत्तमाणस्स कधम्पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी (१२४) पेसिदा (ग) ।

---

(क) शृणोतु आर्य्यः, अस्ति कौशिक इतिगोत्रनामधेयो महाप्रभावो राजर्षिः ।

(ख) तं सख्याः प्रभवमवगच्छ, उज्झितायाः शरीरसंवर्द्धनादिभिः पुनस्तातकण्वोऽपि एतस्याः पिता ।

(ग) शृणोतु आर्य्यः, पुरा किल तस्य राजर्षेः उग्रे तपसि वर्त्तमानस्य कथमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रेषिता ।

---

(१२१) शाश्वते चिरन्तने ब्रह्मणि वेदे वेदानुष्ठाने ब्रह्मचर्य्यव्रते इति भावः नैष्ठिकब्रह्मचारी भगवान् कण्वः नास्य दारपरिग्रहसम्भव इति भावः ।

(१२२) कौशिक इति । कुशस्य अपत्यं पुमान् कौशिक इति गोत्रनामधेयं वंशनाम यस्य तथोक्तः ।

(१२३) प्रभवं प्रभवत्यस्मादिति प्रभवः कारणं जनक इत्यर्थः तम् । उज्झितायाः परित्यक्तायाः मात्रा मेनकयेति शेषः ।

राजा। अस्ति एव अन्यसमाधिभीरुत्वं(१२५) देवानां; ततस्ततः।

अन। तदो वसन्तावदाररमणीए (१२६) समए उम्मादइत्तुअं ताए रूवं पेक्खिअ (क)। [इत्यर्द्धोक्ते लज्जां नाटयति]।

राजा। पुरस्तादवगम्यत एव, सर्वथा अप्सरःसम्भवैषा।

अन। अध इं ? (ख)।

राजा। उपपद्यते। (१२७)

मानुषीभ्य, कथं नु स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥ (१२८)

शकु। [सव्रीड़ाधोमुखी तिष्ठति]।

---

(क) ततो वसन्तावतारसमणीये समये उन्मादहेतुकं तस्या रूपं प्रेक्ष्य।

(ख) अथ किम् ?

---

(१२४) नियमविघ्नकारिणी तपोविघ्नकारिणी।

(१२५) अन्यसमाधीति अन्येषां समाधेः तपोनियमात् भीरुत्वं भयशीलत्वम्।

(१२६) वसन्तेति वसन्तस्य अवतारेण आविर्भावेण रमणीयः मनोहरः तस्मिन्।

(१२७) उपपद्यते युज्यते।

(१२८) मानुषीभ्य इति। अस्य रूपस्य मानुषीभ्यः मनुष्यनारीभ्यः कथं सम्भवः? नैव सम्भव इत्यर्थः। तथाहि प्रभातरलं लावण्यपूर्णं ज्योतिः शशीत्यर्थः वसुधातलात् भूतलात् न उदेति अत्र पूर्वार्द्धपरार्द्धवाक्ययोर्बिम्बानुबिम्बबोधनात् दृष्टान्तालङ्कारः उक्तञ्च दर्पणे दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति। पथ्यावक्त्रं वृत्तं युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितमिति लक्षणात्।

राजा । [आत्मगतम्] । हन्त ! लब्धावकाशो मे मनोरथः । (१२९)

प्रियं । [सस्मितं शकुन्तलां विलोक्य] । पुणोवि वत्तुकामो विअ अज्जो लक्खीअदि (क) ।

शकु । [सखीमङ्गुल्या तर्जयति] ।

राजा । सम्यगुपलक्षितं भवत्या, अस्ति नः सच्चरित-श्रवणलोभादन्यदपि (१३०) प्रष्टव्यम् ।

प्रियं । तेण हि अलं विआरिदेण, अणिज्जन्तणाणुजोओ (१३१) क्खु तवस्सिजणो (ख) ।

राजा । एतत् पृच्छामि ।

वैखानसं किमनया व्रतमाप्रदानात्
व्यापाररोधि मदनस्य निषेवितव्यम् ? ।
अत्यन्तमेव सदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ? ॥ (१३२)

---

(क) पुनरपि वक्तुकाम इव आर्य्यो लक्ष्यते ।

(ख) तेन हि अलं विचारितेन, अनियन्त्रणानुयोगः खलु तपस्विजनः ।

---

(१२९) हन्त हर्षे । लब्धावकाशः प्राप्तावसरः मनोरथः शकुन्तलालाभ-प्रत्याशारूपः अभिलाषः ।

(१३०) सच्चरितेति । सच्चरितस्य सुवृत्तस्य श्रवणलोभात् श्रवणौत्सुक्यादित्यर्थः ।

(१३१) अनियन्त्रणेति । अनियन्त्रणः निर्बाधः अनुयोगः प्रश्नो यस्मिन् तथाभूतः तपस्विजनो प्रश्नविचारी नास्ति यः कश्चनापि शुभोऽशुभो वा प्रश्नः निर्बाधेन कर्त्तव्य इति भावः ।

(१३२) वैखानसमिति । अनया शकुन्तलया मदनस्य कामस्य व्यापारं

प्रियं। अज्ज ! धम्माचरणपरवसो एस जणो, गुरुणो उण से अणुरूववरप्पदाणे संकप्पो (क)। (१३३)

राजा। [सहर्षमात्मगतम्]।

भव हृदय ! साभिलाषं, सम्प्रति सन्देहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ ( १३४ )

शकु। [सरोषमिव]। अणसूए! अहं गमिस्स (ख)।

अन। किं णिमित्तं ? (ग)

---

(क) आर्य्य ! धर्माचरणपरवश एष जनः, गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः।

(ख) अनसूये अहं ! गमिष्यामि।

(ग) किंनिमित्तम् ?

---

सुरतभोगादिकं रुणद्धि परिहरतीति तथाभूतं वैखानसं व्रतं ब्रह्मचर्य्यम् इत्यर्थः आप्रदानात् यावत् वराय दानं न भवेत् तावदित्यर्थः किं निषेवितव्यम् अनुष्ठातव्यम् ? अहो अथवा सदृशे ईक्षणे नयने यासां ताः अतएव वल्लभाः प्रियाः ताभिः हरिणाङ्गनाभिः मृगीभिः समं सह अत्यन्तमेव चिरमेव निवत्स्यति ? यावज्जीवब्रह्मचारिणी भविष्यतीति भावः इयमिति शेषः। अस्या ब्रह्मचर्य्यं परिणयावधिकं यावज्जीवं वेति प्रश्न इति फलितः। वसन्ततिलकं वृत्तं ज्ञेयं वसन्ततिलकं तभजा जगौग इति लक्षणात्।

( १३३ ) गुरोः पितुः कण्वस्य इति यावत्। सङ्कल्पः अभिलाषः।

( १३४ ) भवेति। हे हृदय ! साभिलाषं शकुन्तलायामिति भावः भव, सम्प्रति इदानीं सन्देहस्य सुलभा भवेति संशयस्य निर्णयः निराकरणं जातः भूतः एतस्या लाभे सन्देहो नास्तीति भावः। यत् वस्तु अग्निम् अग्निवत् अस्पृश्य दाहकत्वादिति भावः। आशङ्कसे सम्भावयसि तत् इदं वस्तु शकुन्तलारूपमिति भावः स्पर्शक्षमं सुखस्पर्शं लभ्यमिति यावत् रत्नं जातमिति शेषः।

शकु । इमं असम्बद्धलाविणीं (१३५) पिअम्वदं अज्जाए गोदमीए गदुअ णिवेदइस्सं (क) । [इति उत्तिष्ठति] ।

अन । सहि ण जुत्तं अस्समवासिणो जणस्स अकिद-सक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं (ख) ।

शकु । [उत्तरमदत्त्वैव प्रस्थिता] ।

राजा । [स्वगतम्] । कथमियं गच्छति । [जिघृक्षुरिव पुनरिच्छां निगृह्य] । अहो चेष्टानुरूपिणी (१३६) कामि-जनमनोवृत्तिः । अहं हि

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ (१३७)

प्रियं । [ शकुन्तलामुपेत्य ] । हला चण्डि ! (१३८) णारिहसि गन्तुम् (ग) ।

---

(क) इमाम् असम्बद्धप्रलापिनीं प्रियंवदाम् आर्य्यायै गौतम्यै गत्वा निवे-दयिष्यामि ।

(ख) सखि ! न युक्तम् आश्रमवासिनो जनस्य अकृतसत्कारम् अतिथि-विशेषमुज्झित्वा स्वच्छन्दतो गमनम् ।

(ग) अयि चण्डि ! नार्हसि गन्तुम् ।

(१३५) असम्बद्धप्रलापिनीम् अयुक्तभाषिणीम् ।

(१३६) चेष्टानुरूपिणी चेष्टाम् अभिमतक्रियाम् अनुरूपयति अनुसरतीति तथाभूता मनोवृत्तिर्यथा तथैव तदुचितव्यापारशालिनी इत्यर्थः ।

(१३७) अनुयास्यन्निति । मुनितनयां शकुन्तलाम् अनुयास्यन् अनुगमिष्यन् अहं सहसा अतर्कितोपस्थितेन इत्यर्थः विनयेन वारितः निषिद्धः प्रसरो गतिः यस्य तथाभूतः सन् स्वस्थानात् अचलन्नपि अनुत्तिष्ठन्नपि गत्वा एव किञ्चिद्दूरं चरणौ निक्षिप्य एव प्रतिनिवृत्तः प्रत्यागतः । उत्प्रेक्षालङ्कारः । आर्य्याजातिः ।

शकु । [परिवृत्य सभ्रूभङ्गम्] । किं त्ति ? (क)

प्रियं । दुवे मे रुक्खसेअणके (१३९) धारेसि, तेहिं दाव अत्ताणं मोआवेहि, तदो गमिस्ससि (ख) । [इति बलात् निवर्त्तयति] ।

राजा । भद्रे ! वृक्षसेचनात् एव अत्रभवतीं परिश्रान्तां तर्कयामि, तथा हि अस्याः ।

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणात्
अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसा जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्द्धजाः ॥(१४०)

तदहमेनामनृणां करोमि । [इति अङ्गुरीयकं ददाति] ।

(क) किमिति ?

(ख) द्वे मे वृक्षसेचनके धारयसि, ताभ्यां तावदात्मानं मोचय, ततो गमिष्यसि ।

(१३८) चण्डि ! अतिकोपने ! चण्डस्तु अत्यन्तकोपन इत्यमरः ।

(१३९) वृक्षसेचनके वृक्षः सिच्यते आभ्यामिति वयोक्तं जलपूर्णकलसौ इत्यर्थः वारद्वयं वृक्षसेचनं वा ।

(१४०) स्रस्तांसाविति । घटस्य जलकुम्भस्य उत्क्षेपणात् ऊर्द्ध्वोत्तोलनात् बाहू भुजौ स्रस्तौ अवनतौ अंसौ स्कन्धौ ययोः तथाभूतौ तथा अतिमात्रम् अत्यर्थं लोहितं रक्तं स्वभावादधिकरक्तमित्यर्थः तलं ययोः तादृशौ । प्रकम्पेन अङ्गचलनेन अधिकः स्वभावादिति भावः श्वासः निःश्वासः स्तनयोः वेपथुं कम्पं स्पन्दनमित्यर्थः जनयति । घर्माम्भसा स्वेदवारिणा वदने कर्णयोः शिरीषे तदाख्यकुसुमे कर्णाङ्घ्रि इति तयोक्तं जालकं विन्दुसमूहः बद्धं जनितमित्यर्थः । तथा बन्धे स्रंसिनि

सख्यौ प्रतिगृह्य नामाक्षराणि वाचयित्वा च परस्परमवलोकयतः।

राजा। अलम् अन्यथासम्भावनया, राज्ञः प्रतिग्रहोऽयम् (१४१)।

प्रियं। तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं (१४२) अज्जस्स वअणादो ज्जेव अणिणा एसा भोदु (क)।

अन। हला सउन्तले! मोआविदासि अणुकम्पिणा अज्जेण अहवा राएसिणा, ता कहिं दाणिं गमिस्ससि? (ख)

शकु। [आत्मगतम्]। ण एदं जणं परिहरिस्सं जइ अत्तणो पहविस्सं (ग)। (१४३)

---

(क) तेन हि नार्हति एतत् अङ्गुरीयकम् अङ्गुलीवियोगम्, आर्य्यस्य वचनात् एव अनृणा एषा भवतु।

(ख) अयि शकुन्तले! मोचितासि अनुकम्पिना आर्य्येण, अथवा राजर्षिणा, तत् कुत्र इदानीं गमिष्यसि?

(ग) नैतं पर्य्यहरिष्यं यदि आत्मनः प्राभविष्यम्।

---

शिथिलीभवति सति मूर्द्धजाः केशाः एकहस्तेन यमिताः संयम्य धृता इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(१४१) अन्यथा सम्भावनया मम नृपत्वशङ्कया इत्यर्थः। राज्ञः सकाशात् अयं प्रतिगृह्यते इति प्रतिग्रहः राज्ञा मह्यं प्रसाददत्त इति भावः।

(१४२) इदम् अङ्गुरीयम् अङ्गुलेर्भवत इति शेषः वियोगं विच्छेदं न अर्हति भवदङ्गुलौ एव इदं तिष्ठतु इति भावः।

(१४३) न पर्य्यहरिष्यं न पर्य्यत्यक्षं यदि आत्मनः स्वस्य प्राभविष्यं मम

प्रियं । किं दाणिं ण गच्छीअदि ? (क)

शकु । दाणिं किं तुह आअत्तह्मि ? जदो मे रोअदि तदो गमिस्सं (ख) ।

राजा । [शकुन्तलां विलोकयन् आत्मगतम्] । किं खलु यथा वयम् अस्याम् इयमपि अस्मान् प्रति तथा स्यात् ? अथवा लब्धावकाशा मे मनोवृत्तिः । कुतः

वाचं न मिश्रयति यद्यपि मद्वचोभिः,
कर्णं ददात्यवहिता मयि भाषमाणे ।
कामं न तिष्ठति मदाननसम्मुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ (१४४)

[नेपथ्ये] । भो भोः तपस्विनः ! तपोवनसन्निहित-सत्त्वरक्षणाय सज्जीभवन्तु भवन्तः, प्रत्यासन्नः (१४५) किल मृगयाविहारी राजा दुष्मन्तः ।

---

(क) किम् इदानीं न गम्यते ?

(ख) इदानीं किं तव आयत्ता अस्मि, यदा मे रोचते तदा गमिष्यामि ।

---

स्वाधीनतायां सत्यां नैनं जनं कथमपि परित्यजेयं पितुरधीना अहं किं करोमि इति भावः ।

(४३) वाचमिति । यद्यपि इयं शकुन्तला मम वचोभिः वाच न मिश्रयति मया सह न आलपति इत्यर्थः तथापि मयि भाषमाणे कथयति सति अवहिता दत्तावधाना सती कर्णं ददाति मद्वचनं सादरं शृणोति इति भावः । मदानन-सम्मुखी सम्मुखनिविष्टदृष्टिरिति भावः कामं सम्यक् न तिष्ठति, तु किन्तु अस्या दृष्टिः भूयिष्ठं बाहुल्येन प्रायश इत्यर्थः अन्यः मदितरः विषयो लक्ष्यः यस्याः तथाभूता न । वसन्ततिलकं वृत्तम् ।

(१४५) प्रत्यासन्नः सन्निहितः ।

तुरगखुरहतस्तथाहि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु ॥(१४६)

राजा । [स्वगतम्] । अहो ! धिक्, मम अन्वेषिणः सैनिकाः तपोवनम् अभिरुन्धन्ति । (१४७)

[पुनर्नेपथ्ये] । भो भोः तपस्विनः ! पर्य्याकुलयन् (१४८) वृद्धस्त्रीकुमारान् एष गजः प्राप्तः ।

तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्तः,
प्रौढ़ाकृष्टव्रततिवलयासञ्जनाज्जातपाशः ।
मूर्त्तो विघ्नस्तपस इव नो, भिन्नसारङ्गयूथो,
धर्मारण्यं विरुजति गजः स्यन्दनालोकभीतः ॥ (१४९)

---

(१४६) तुरगेति । तथाहि तमेवार्थं जानीहि इत्यर्थः तुरगाणाम् अश्वानां खुरैः हतः चुस्खः रेणुः धूलिः पर्वतीय इति शेषः तथा अद्रिरेणुरिति पाठान्तरम् । अन्यथा आरुण्यलाभासम्भवात् इति भावः । परिणतः अवसानं गतः अस्तोन्मुख इत्यर्थः यः अरुणः सूर्य्यः तस्येव प्रकाशो दीप्तिः यस्य तथाभूतः सन् शलभसमूह इव पतङ्गवृन्दमिव विटपेषु शाखासु विषक्तानि स्थितानि जलार्द्राणि वल्कलानि येषां तथाविधेषु आश्रमद्रुमेषु पतति । उपमालङ्कारः । पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ।

(१४७) अभिरुन्धन्ति आवृण्वन्ति बाधन्ते इत्यर्थः ।

(१४८) पर्य्याकुलयन् व्याकुलीकुर्वन् ।

(१४९) तीव्र इति । स्यन्दनस्य रथस्य आलोकात् दर्शनात् भीतः गजः तीव्रेण उत्कटेन आघातेन अभिमुखस्य तरोः वृक्षस्य स्कन्धे भग्नः एको दन्तो यस्य तथोक्तः भग्नेत्यत्र लग्नेति पाठे भग्नः सन् लग्नः संसक्त इति यावत् । तथा प्रौढम् उद्धतं यथा तथा आकृष्टेन व्रततिवलयेन लतामण्डलेन आसञ्जनात् वेष्टनात् जातः पाशः पदबन्धनरज्जुर्यस्य तथाविधः भिन्नं द्रावितं सारङ्गाणां

सर्वाः श्रुत्वा ससम्भ्रममुत्तिष्ठन्ति।

राजा। [स्वगतम्]। अहो! धिक्, कथम् अपराद्ध-स्तपस्विनामस्मि, भवतु प्रतिगच्छामि तावत्।

सख्यौ। महाभाअ! इमिणा हत्थिसम्भमेण पज्जाउला म्ह अणुजाणीहि णो उड़अगमणे (क)।

अन। [शकुन्तलां प्रति]। हला सउन्तले! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होम्ह (ख)

शकु। [गतिरोधं रूपयित्वा]। हद्धी! हद्धी! ऊरुत्थम्भ-विव्भलम्हि (१५०) संवुत्ता (ग)।

राजा। स्वैरं स्वैरं (१५१) गच्छन्तु भवत्यः। आश्रम-बाधा यथा न भवति तथाहमपि यतिष्ये।

सख्यौ। महाभाअ! विदिदभूइट्ठोसि, सम्पदं उव-

(क) महाभाग! अनेन हस्तिसम्भ्रमेण पर्य्याकुलाः स्मः, तदनुजानीहि नः उटजगमने।

(ख) अयि शकुन्तले! पर्य्याकुला आर्य्या गौतमी भविष्यति, तदेहि शीघ्र-मेकस्था भवामः।

(ग) हा धिक्! हाधिक् ऊरुस्तम्भविह्वलास्मि संवृत्ता।

मृगाणां यूथं समूहः येन तादृशः सन् मूर्त्तः देहवद्धः तपसः विघ्न इव नः अस्माकं धर्मारण्यं तपोवनं विरुजति पीड़यति। उत्प्रेचालङ्कारः। मन्दाक्रान्ता-वृत्तम्।

(१५०) ऊर्व्विति ऊर्व्वोः स्तम्भेन अचलनेन विह्वला विवशा।

(१५१) स्वैरं स्वैरं मन्दं मन्दम्।

आरमज्झत्थदाए अवरद्धम्ह, तं मरिसेहि असम्भाविदसक्कारं, भूयोवि पच्चवेक्खणणिमित्तं (१५२) अज्जं विसवेम्ह (क)।

राजा। मामेवं, दर्शनेनैव भवतीनां सम्भूतसत्कारोऽस्मि।

शकु। हला अणसूए! अहिणवकुससूइपरिक्खदं (१५३) मे चलणं, कुरुवअसाहापरिलग्गञ्च वक्कलं, दाव पडिपालेध मं जाव णं मोआवेमि (ख)। [इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता]।

राजा। [निःश्वस्य]। गताः सर्वाः, भवतु अहमपि गच्छामि, शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति, यावदनुयात्रिकान् अतिदूरे तपोवनस्य निवेशयामि (१५४) न खलु शक्तोऽस्मि शकुन्तलादर्शनव्यापारात् आत्मानं निवर्त्तयितुम्। मम हि

(क) महाभाग! विदितभूयिष्ठोऽसि, साम्प्रतम् उपचारमध्यस्थतया अपराद्धाः स्मः, तं मर्षयासम्भावितसत्कारं, भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः।

(ख) अयि अनसूये! अभिनवकुशसूचिपरिक्षतं मे चरणं, कुरुवकशाखापरिलग्नञ्च वल्कलं, तावत् प्रतिपालयत मां, यावदेनं मोचयामि।

(१५२) उपचारेति उपचारेषु उचितेषु सत्कारेषु मध्यस्थतया औदासीन्येन इत्यर्थः। असम्भावितेति असम्भावितः अकृतः सत्कारः सम्मानं यस्य तादृशम्। भूयोऽपि पुनरपि प्रत्यवेक्षणनिमित्तं दर्शनार्थम्।

(१५३) अभिनवेति अभिनवया कुशस्य सूच्या अग्रभागेन परिक्षतं विद्धम्।

(१५४) अनुयात्रिकान् अनुचरान् निवेशयामि स्थापयामि।

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ (१५५)

इति निष्क्रान्ताः सर्वे ।

प्रथमोऽङ्कः ।

---

## द्वितीयोऽङ्कः ।

—*—

ततः प्रविशति विदूषकः । (१)

विदू । [निश्वस्य] । भो हदोह्मि एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विस्सो,(२)अअं मिओ, अअं वराहो,

---

(क) भो हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विस्सः, अयं

---

(१५५) गच्छतीति । मम शरीरं पुरः अग्रतः गच्छति, प्रतिवातं वायुं प्रति नीयमानस्य चाल्यमानस्य केतोः ध्वजस्य चीनांशुकमिव असंस्थितं चञ्चलं तापसकन्यायाम् अनुरक्तमिति भावः चेतः पश्चात् तापसकन्यां प्रतीति भावः धावति चलति । यथा ध्वजोऽग्रे याति तदुपरिस्थितं वस्त्रन्तु वायुगत्या पश्चात् प्रसरति तद्वदिति भावः । उपमालङ्कारः । आर्य्यावृत्तम् ।

(१) विदूषकः । शृङ्गारिनायकस्य नर्मसचिवः । तथाच दर्पणे । कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञ इति ।

(२) वयस्यभावेन सख्येन । निर्विस्सः प्राप्तनिर्वेदः नितरां दुःखित इति यावत् ।

अअं सद्दूलो त्ति मज्झन्दिणेवि गिम्हे विरलपादवच्छाआसुं(३) वणराईसुं आहिण्डिअ पत्तसङ्करकसाअविरसाइं (४) उण्ह-कडुआइं पिज्जन्ति गिरिणईसलिलाइं, अणिअदवेलञ्च(५)उण्होसमंसभूइट्ठं भुञ्जीअदि, तुरअगआणाञ्च सद्देण रत्तिं पि मे णत्थि पकामसुइदव्वं (६) महन्ते ज्जेव पच्चूसे दासीए पुत्तेहिं साउणिअलुद्धेहिं कण्णोवघादिणा (७) वण-गमणकोलाहलेण पडिबोधिदोम्हि, एत्तिकेणवि मे पीड़ा ण संवुत्ता(८)जदो अअं गण्डस्स उवरि विप्फोड़ओ संवुत्तो,

मृगः, अय वराहः अयं शार्दूल इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्ड्य पत्रसङ्करकषायविरसानि उष्णकटुकानि पीयन्ते गिरिणदीसलिलानि, अनियतवेलञ्च उष्णोष्णमांसभूयिष्ठं भुज्यते, तुरगगजानाञ्च शब्देन रात्रावपि मे नास्ति प्रकामशयितव्यं महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिकलुब्धैः कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि, एतावतापि मे पीड़ा न संवृत्ता यतोऽयं गण्डस्योपरि विस्फोटकः संवृत्तः, तेन हि किल अस्मास्ववहीनेषु

(३) विरलेति विरला अल्पाल्पा पादपानां वृक्षाणां छाया यासु तथोक्तासु ।

(४) आहिण्ड्य परिभ्रम्य। पत्रेति पत्राणां सङ्करेण सम्मिलनेन कषायाणि अत एव विरसानि विस्वादानि ।

(५) अनियतवेलम् अनिश्चितसमयम् ।

(६) प्रकामशयितव्यं स्वच्छन्दतः शयनमित्यर्थः ।

(७) दास्याः पुत्रैः इतरजनैरित्यर्थः । शाकुनिकलुब्धैः शकुनैः पक्षिभिः जीवन्तीति शाकुनिकाः ते च ते लुब्धाश्चेति तैः मृगयुभिरित्यर्थः । कर्णोपघातिना श्रोत्रकटुनेत्यर्थः ।

(८) संवृत्ता सञ्जाता ।

तेण हि किल अह्मेसुं अवहीणेसुं (९) तत्थभवदा मिआणुसारिणा अस्समपदं पविट्ठेण मम अधसदाए (१०) सउन्तला णाम कावि तवस्सिकसमा दिट्ठा तं पेक्खिअ सम्पदं णअरगमणस्स कधम्पि ण करेदि, एवं ज्जेव चिन्तअन्तस्स मे पहादा अच्छिसुं (११) रअणी, का गदी जाव णं किदआआरपरिग्गहं (१२) पिअवअस्सं पेक्खामि । [ परिक्रम्यावलोक्य च ] एसो बाणासणहत्थो हिअअणिहिदपिअअणो (१३) वणपुप्फमालाहारी इदो ज्जेव आअच्छदि पिअवअस्सो, भोदु अङ्गभङ्गविअलो (१४) भविअ चिट्ठिस्सं, एवम्पि णाम विस्सामं लहेअं (क) । [इति दण्डकाष्ठमवलम्ब्य स्थितः] ।

तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेन ममाधन्यतया शकुन्तला नाम कापि तपस्विकन्यका दृष्टा, तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति, एवमेव चिन्तयतो मे प्रभाता अक्षिषु रजनी, का गतिर्यावदेनं कृताचारपरिग्रहं प्रियवयस्यं प्रेक्षे । एष बाणासनहस्तो हृदयनिहितप्रियजनो वनपुष्पमालाधारी

---

(९) अवहीनेषु पश्चात् पतितेषु ।

(१०) अधन्यतया दौर्भाग्येन इत्यर्थः ।

(११) अक्षिषु नेत्रेषु ।

(१२) कृताचारपरिग्रहं कृतः आचारस्य मृगया व्यापारानुष्ठानस्य परिग्रहः वैमुख्यं येन तथोक्तम् । कृतदारपरिग्रहमित्यपपाठः तदानीं तस्य शकुन्तलाया ग्रहणाभावात् पूर्वरागमात्रस्यैव जातत्वादिति ।

(१३) बाणासनहस्तः बाणः अस्यते क्षिप्यते अनेनेति बाणासनं धनुः, तत् हस्ते यस्य तथोक्तः धनुर्धर इत्यर्थः । हृदयेति हृदये निहितः स्थापितः प्रियजनः येन तादृशः प्रियतमामनाः आरत्रिन्नित्यर्थः ।

ततः प्रविशति यथानिर्दिष्टो राजा ।

राजा । [आत्मगतम्] ।

कामं प्रिया न सुलभा, मनस्तु तद्भावदर्शनाश्वासि ।

अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ (१५)

[स्मितं कृत्वा] । एवमात्माभिप्रायसम्भावितेष्टजनचित्त-वृत्तिः प्रार्थयिता विप्रलभ्यते (१६) कुतः

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया,

यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।

इतएवागच्छति प्रियवयस्यः, भवतु अङ्गभङ्गविकलो भूत्वा स्थास्यामि, एवमपि नाम विश्रामं लभेयम् ।

---

(१४) अङ्गेति अङ्गानाम् अवयवानां भङ्गेन उन्नतानतस्थानपरिधावनजनितेन उपमर्देनेत्यर्थः विकलः विवशः ।

(१५) काममिति । प्रिया शकुन्तला कामं प्रायश इत्यर्थः न सुलभा न सुप्रापा, तु किन्तु मनः तस्या भावस्य मयि अनुरागव्यञ्जकताद्दशसव्याजावलोकनादिरूपस्य दर्शनेन आश्वसिति लभ्या मम प्रियेति समाश्वासं करोतीति तथाभूतम् । तथाहि मनसिजे कामे अकृतार्थेऽपि असङ्गमेऽपि इति भावः उभयोः प्रियायाः प्रियस्य मम चेत्यर्थः प्रार्थना समागमलालसा रतिं प्रीतिं प्रत्याशाजनितं सन्तोषमित्यर्थः कुरुते । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । आर्य्यावृत्तम् ।

(१६) आत्माभिप्राय इति । आत्मनः स्वस्य अभिप्रायेण आशयेन सम्भाविता अनुमिता इष्टजनस्य प्रियजनस्य चित्तवृत्तिः मनोऽभिप्रायः येन तथोक्तः यथाहं तस्यां लालसः सापि तथैव मयीति मन्यमान इत्यर्थः । प्रार्थयिता प्रियजनप्रणय-लिप्सुरित्यर्थः । विप्रलभ्यते प्रतार्य्यते ।

(१७) स्निग्धमिति । अन्यतः अन्यस्मिन् विषयेऽपि नयने नेत्रे प्रेरयन्त्या निक्षिपन्त्या तया यत् स्निग्धं सानुरागमित्यर्थः वीक्षितम् अवलोकितं नितम्बयोः

मागा इत्युपरुद्धया यदपि तत् सासूयमुक्ता सखी,
सर्वं तत् किल मत्परायणमहो कामः स्वतां पश्यति ॥(१७)

विदू। [तथा स्थित एव]। भो महाराअ! ण मे हत्थो पसरदि, ता वाआ मेत्तेण जआवीअसि, जअदु जअदु भवं (क)।

राजा। [विलोक्य सस्मितम्] कुतोऽयं गात्रोपघातः? (१८

विदू। कधं कुदो त्ति, सअं ज्जेव अच्छिं भञ्जिअ (१९ अच्छुकारणं पुच्छसि? (क)

राजा। न खलु अवगच्छामि, भिन्नार्थम् (२०) अभिधीयताम्।

---

(क) भो महाराज! न मे हस्तः प्रसरति, तद्वाचा मात्रेण ज्याप्यसे, जयति जयति भवान्। जाप्यसे जययुक्तः कार्य्यसे।

(क) कथं कुत इति, स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि?

---

गुरुतया भारवत्तया विलासादिव विभ्रमच्छलादिवेत्यर्थः यत् मन्दं मृदु यथा तथा यातं गतं, तथा मागाः न गच्छ इति उपरुद्धया सख्या प्रियंवदया निषिद्धयेत्यर्थः तया शकुन्तलया सखी प्रियंवदा यदपि यत्र तत् सासूयं सेर्षम् उक्ता, तत् सर्वम् अहमेव परम् अयनम् आश्रयः विषय इत्यर्थः यस्य तथाभूतं यदर्थं कृतमित्यर्थः। अहो आश्चर्यं कामः मदनाविष्ट इत्यर्थः स्वताम् आत्मीयताम् अन्यविषयाणामपि क्रियाणां स्वविषयत्वमित्यर्थः पश्यति सम्भावयतीति यावत्। शार्दूलविक्रीडितं वृत्तम्। कामः स्वतां पश्यतीति सामान्येन पूर्ववाक्यगतविशेषाणां समर्थनात् अर्थान्तरन्यासः।

(१८) गात्रोपघातः गात्रस्य उपघातः उपमर्दः अङ्गवैकल्यमिति यावत्।

(१९) अक्षि भङ्क्त्वा नेत्रमाहत्येत्यर्थः।

(२०) भिन्नार्थं विश्लकलितार्थं स्पष्टार्थमित्यर्थः।

विदू । जं वेदसो खुज्जस्स लीलं विडम्बेदि (२१) तं किं अत्तणो पह्वावेण अधवा णईवेअस्स ? (क) ।

राजा । नदीवेगस्तत्र कारणम् ।

विदू । ममावि भवं (ख) ।

राजा । कथमिव ?

विदू । जुत्तं णाम एव्वं जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं (२२) पदेसं च वणचलवित्तिणा होदव्वंत्ति किं एत्थ मन्तीअदु, अहं उण बह्मणो, पच्चहं सापदाणुसरणेहिं संक्खोहिदसन्धिबन्धणाणं (२३) अत्तणो अङ्गाणं अणीसोह्मि (२४) ता पसीद मे एक्काहम्मि दाव विसमीअदु (ग) ।

---

(क) यद्वेतस: कुब्जस्य लीलां विड़म्बयति तत् किमात्मन: प्रभावेण अथवा नदीवेगस्य ?

(ख) ममापि भवान् ।

(ग) युक्तं नामैवं यत्त्वया राज्यकार्य्याणि उज्झित्वा तादृशमस्खलितपदं प्रदेशञ्च वनचरवृत्तिना भवितव्यमिति किमत्र मन्त्र्यते अहं पुनर्ब्राह्मण: प्रत्यहं श्वापदानु-

---

(२१) विड़म्बयति अनुकरोति ।

(२२) अस्खलितेति अस्खलितम् अभ्रष्टं पदं पदविन्यासो यत्र तादृशम् अवन्धुरत्वादिति भाव: अथवा पुरुषानुक्रमेण अभ्रष्टं पदम् आधिपत्यं यत्र तथाभूतम् ।

(२३) श्वापदानुसरणेन शुन: कुक्कुरात् आपदो येषां ते श्वापदा: सिंहव्याघ्रादय श्वानो हि तेषां पदवीम् अन्विष्य बहिष्कुर्व्वन्तीति तेषां श्वापदत्वं बोध्यम् । तेषाम् अनुसरणेन अनुगमनेन । संक्षोभितेति संक्षोभित: सम्यक् चालित: सन्धिबन्ध: संयोगसम्धानस्थानं येषां तथाभूतानाम् ।

(२४) अनीश: अक्षम:, गात्राणि मे न वशे तिष्ठन्तीति भाव: ।

राजा । [आत्मगतम्] । अयमेवमाह, ममापि काण्व-सुताम् अनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः । तथाहि

न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥ (२५)

विदू । [राज्ञो मुखम् अवलोक्य] । अत्तभवं किम्पि हिअए कदुअ मन्तेदि, अरसे क्खु मए रुदिदं (क) ।

राजा । [सस्मितम्] । अनतिक्रमणीयं सुहृद्वाक्यम् इति स्थितोऽस्मि ।

विदू । [सपरितोषम्] । तेण हि तुमं चिरं जीव (ख) । [इति उत्थातुम् इच्छति ] ।

राजा । तिष्ठ, शृणु मे सावशेषं वचः ।

विदू । आणवेदु भवं (ग) ।

---

सरणे: सङ्क्षोभितसन्धिबन्धनानाम् आत्मनोऽङ्गानाम् अनीशोऽस्मि, तत् प्रसीद मे एकाहमपि तावद्विश्रम्यताम् ।

(क) अत्रभवान् किमपि हृदये कृत्वा मन्त्रयति, अरण्ये खलु मया रुदितम् ।

(ख) तेन हि त्वं चिरं जीव ।

(ग) आज्ञापयतु भवान् ।

(२५) नेति । प्रियायाः शकुन्तलायाः सहवसतिमुपेत्य प्राप्य यैः लोचनयोः नयनयोः कान्तेः शोभायाः संविभागः सम्यक् विभजनं कृत इव तेषु मृगेषु अधिज्यं मौर्वीयुक्तम् आहितसायकं सशरमित्यर्थः इदं धनुः नमयितुं न उत्सहिष्ये न उद्यतोऽहं करिष्यामि । उत्प्रेक्षालङ्कारः । पुष्पिताग्रावृत्तम् ।

राजा । विश्रान्तेन भवता मम अन्यस्मिन् अनायसे कर्मणि सहायेन भवितव्यम् ।

विदू । किं मोदअखज्जिआए ? (क) । (२६)

राजा । यद्वक्ष्यामि ।

विदू । गहीदो क्खणो (ख) । (२७)

राजा । कः कोऽत्र भोः ?

[दौवारिकः प्रविश्य] । आणवेदु भट्टा (ग) ।

राजा । रैवतक ! सेनापतिस्तावत् आहूयताम् ।

दौवा । तह । [इति निष्क्रम्य सेनापतिना सह प्रविश्य] एदु एदु अज्जो, एस आलावदिस्सकण्णो (२८) भट्टा इध ज्जेव चिट्ठदि, उवसप्पदु णं अज्जो (घ) ।

(क) किं मोदकखादिकायाम् ?

(ख) गृहीतः क्षणः ।

(ग) आज्ञापयतु भर्त्ता ।

(घ) तथा । एतु एतु आर्य्यः, एष आलापदत्तकर्णो भर्त्ता इहैव तिष्ठति उपसर्पतु एनम् आर्य्यः ।

(२६) मोदकखादिकायां मोदकं मिष्टद्रव्यविशेषः । तस्य खादिकायां खादने भक्षणे इत्यर्थः ।

(२७) गृहीतः क्षणः, क्षणः समयः गृहीतः अविलम्बितः अवहितोऽस्मीति भावः ।

(२८) आलापेति आलापे दत्तः कर्णः येन तथाविधः आलापं शृण्वन् इत्यर्थः ।

सेना। [राजानम् अवलोक्य स्वगतम्]। दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव (२९) संवृत्ता। तथाहि देवः

अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा,
रविकिरणसहिष्णुः, स्वेदलेशैरभिन्नः।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं,
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥ (३०)

[उपगम्य]। जयति जयति स्वामी। स्वामिन्! गृहीतमृगप्रचारं सूचितश्वापदम् अरण्यं (३१) तत् किम् अन्यत् अनुष्ठीयताम्?

राजा। भद्रसेन! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना (३२) माधव्येन।

---

(२९) दृष्टेति दृष्टः दोषः प्राणिहिंसादिरूपः यस्यां तादृशी। गुणायैव उपकारायैव।

(३०) अनवरतेति। अनवरतं सततं धनुषः ज्यायाः मौर्व्याः आस्फालनेन कर्षणेन क्रूरं कठिनं वर्ष्म विग्रहः यस्य तथाभूतः शरीरं वर्ष्म विग्रह इत्यमरः। क्रूरकर्मेति पाठे अनवरतधनुर्ज्याया आस्फालनं कर्षणमेव क्रूरं निष्ठुरं प्राणिघातनफलत्वादिति भावः कर्म यस्य तादृशः। रविकिरणान् सौरतापान् सहते इति तथोक्तः स्वेदलेशैः घर्मवारिबिन्दुभिः अभिन्नः युक्त इत्यर्थः विशेषणत्रयेण शरीरस्य सबलत्वं श्रमसहत्वं घर्मनिःसरणेन लघुत्वं चोक्तम्। गिरिचरः पार्वतीयः नागः गज इव अपचितं कृशमपि व्यायतत्वात् प्रलम्बत्वात् अलक्ष्यं कृशत्वेन अप्रतीयमानमित्यर्थः प्राणः बलं सारो यस्य तथाभूतं बलवत्तरमित्यर्थः गात्रं बिभर्त्ति। उपमालङ्कारः। मालिनीवृत्तम्।

(३१) गृहीतेति गृहीतः ज्ञातः मृगाणां प्रचारो यस्मिन् तथोक्तम्। सूचिताः शुनां प्रचारेण प्रकाशिताः श्वापदा यत्र तथोक्तम्।

(३२) मृगयापवादिना मृगयाम् अपवदति निन्दतीति तथोक्तेन मृगयाविद्वेषिणा इत्यर्थः।

सेना। [जनान्तिकम्)। सखे माधव्य! स्थिरप्रतिज्ञो भव, अहं तावत् स्वामिनः चित्तम् अनुवर्त्तिष्ये। [प्रकाशम्] देव! प्रलपति एष वैधेयः, ननु प्रभुरेव निदर्शनम्। (३३) पश्यतु देवः

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः,
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः? ॥(३४)

विदू। [सरोषम्]। अवेहि (३५) रे उच्छाहहेतुअ! अत्तभवं पइदिं आवस्सो, तुमं दाव दासीए पुत्तो अड़इदो अड़इं आहिण्डन्तो (३६) जाव णरणासिआलोलुअस्स कस्सवि जिण्णरिच्छस्स (३७) मुहे णिवड़िदो होहि (क)।

---

(क) अपेहि रे उत्साहहेतुक! अत्रभवान् प्रकृतिम् आपन्नः, त्वं तावत्

---

(३३) वैधेयः मूढः। निदर्शनं प्रमाणं दृष्टान्तभूत इत्यर्थः।

(३४) मेद इति। वपुः शरीरं मेदसां धातुविशेषाणां छेदेन ह्रासेन कृशं क्षीणम् उदरं यस्य तथोक्तम् अतएव लघु लाघवयुतं भारवत्तया हीनमित्यर्थः उत्थानयोग्यम् उद्यमशक्तमित्यर्थः भवति, सत्त्वानां प्राणिनां भयक्रोधयोः सतोः विकृतिमत् विकृतमित्यर्थः चित्तं लक्ष्यते अनुभूयते। चले चञ्चले धावतीत्यर्थः लक्ष्ये शरव्ये इषवः शराः सिध्यन्ति सफलानि भवन्तीति यत् स च धन्विनां धनुर्धराणाम् उत्कर्षः, तस्मात् मृगयां यत् व्यसनं दोषं वदन्ति लोका इति शेषः तत् मिथ्या हि असत्यमेव, यतः ईदृक् एतादृशः विनोदः आनन्दः कुतः? न कुतोऽपि भवतीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(३५) अपेहि अपगच्छ दूरीभवेत्यर्थः।

(३६) आहिण्डमानः परिभ्रमन्।

राजा। सेनापते! आश्रमसन्निकर्षे (३८) स्थितोऽस्मि इति वचनं ते न अभिनन्दामि। अद्य तावत्।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताड़ितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥ (३९)

सेना। यथा प्रभविष्णवे रोचते।

राजा। तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः (४०) यथा च मे सैनिकास्तपोवनं नाभिरुन्धन्ति, दूरात् परिहरन्ति (४१) च, तथा निषेद्धव्याः। पश्य

---

दास्याः पुत्रौऽटवीतोऽटवीम् आहिण्डमानो यावत् नरनासिकालोलुपस्य कस्यापि जीर्णर्क्षस्य मुखे निपतितो भव।

---

(३७) जीर्णऋक्षस्य वृद्धभल्लूकस्य जीर्णा एव ते नितरां निष्ठुरा भवन्तीति प्रसिद्धिः।

(३८) आश्रमसन्निकर्षे तपोवनसन्निधौ।

(३९) गाहन्तामिति। महिषाः शृङ्गैः मुहुः पुनः पुनः ताड़ितं चालितं निपानसलिलं क्षुद्रजलाशयजलं गाहन्तां प्रविशन्तु। मृगाणां कुलं वृन्दं छायासु अनातपेषु बद्धं मिलितमित्यर्थः कदम्बकं सङ्घः यस्य तथाभूत सत् रोमन्थम् उद्गीर्य्य चर्वणम् अभ्यस्यतु करोतु। वराहाणां वन्यशूकराणां पतिभिः विस्रब्धैः सांद्रैः पल्वले क्षुद्रजलाधारे मुस्तानां घासविशेषमूलानां क्षतिः क्षयः भक्षणमिति यावत् क्रियताम्। इदञ्च शिथिलः ज्याबन्धः मौर्वीयोगः यस्य तादृशं भ्रष्टमौर्वीकमित्यर्थः अस्माकं धनुः विश्रामं लभतां विश्राम्यतु इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(४०) पुरोगतान् अग्रगामिनः। धनुर्ग्राहिणः धनुर्धरान्।

(४१) परिहरन्ति परित्यजन्ति।

शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोऽभिभवाद्दहन्ति (४२

सेना। यथाज्ञापयति स्वामी।

विदू। भो उच्छाहहेतुअ! णिक्काम णिक्काम (क)। (४३)

[सेनापतिर्निष्क्रान्तः]।

राजा। [परिजनानवलोक्य]। मृगयावेशमपनयन्तु (४४) भवन्तः। रैवतक! त्वमपि स्वनियोगमशून्यं कुरु। (४५)

लेव। जं महाराओ आणवेदि (ख) [इति निष्क्रान्तः]।

विदू। किदं भवदा सम्पदं णिम्मच्छिअं (४६) ता इमस्सिं पादवच्छाआविरइदविदाणसणाहे (४७) सिलाअले उवविसदु भवं, जाव अहम्पि सुहासीणो होमि (ग)।

(क) भो उत्साहहेतुक! निष्क्राम निष्क्राम।

(ख) यन्महाराज आज्ञापयति।

(ग) कृतं भवता साम्प्रतं निर्मक्षिकं, तदस्मिन् पादपच्छायाविरचितवितान-

---

(४२) शमेति। शम एव प्रधानं येषां तेषु तपोवनेषु गूढं दाहात्मकं दहनं तेजः अस्ति हि अस्त्येव। ते प्रसिद्धाः सूर्यकान्ताः मणिविशेषाः स्पर्शानुकूलाः सुखस्पर्शा अपि अन्यस्य तेजसः सौरस्येति भावः अभिभवात् आक्रमणात् दहन्ति ते हि शान्तास्तपोधना अपि अस्माभिरभिभूयमानाश्चेत् अस्मान् धक्ष्यन्तीति भावः। उपजातिवृत्तम्।

(४३) उत्साहहेतुक उत्साहवर्द्धक। णिक्काम णिक्काम अपगच्छ अपगच्छ।

(४४) अपनयन्तु त्यजन्तु।

(४५) अशून्यं कुरु प्रतिपालयेति भावः।

(४६) निर्मक्षिकं मक्षिकाणाम् अभावः निर्मक्षिकं जनशून्यमिति भावः।

राजा । गच्छ अग्रतः ।

विदू । एदु एदु भवं (क) । [उभौ परिक्रम्य उपविष्टौ] ।

राजा । सखे माधव्य ! अनाप्तचक्षुःफलोऽसि (४८) येन त्वया द्रष्टव्यानां परं न दृष्टम् ।

विदू । णं भवं ज्जेव मे अग्गदो वट्टदि (ख) ।

राजा । सर्वः खलु कान्तम् (४९) आत्मानं पश्यति, अहन्तु तामेव आश्रमललामभूतां (५०)शकुन्तलामधिकृत्य ब्रवीमि ।

विदू । [स्वगतम्] । भोदु ण से प्पस्सअं (५१) वड्ढइस्सं । [प्रकाशम्] । भो जइ सा तवस्सिकसआ अणब्भत्थणोआ, (५२) ता किं ताए दिट्ठाए (ग) ।

---

सनाथे शिलातले उपविशतु भवान्, यावत् अहमपि सुखासीनो भवामि । निर्मक्षिकम् इति अनेन जनशून्यं सूच्यते ।

(क) एतु एतु भवान् ।

(ख) ननु भवान् एव मे अग्रतो वर्त्तते । द्रष्टव्यतमस्य भवतः पुरोवर्त्तित्वेन द्रष्टव्यानां परं न दृष्टम् इति कथम् उच्यते इति आशयः ।

(ग) भवतु न अस्य प्रश्रयं वर्द्धयिष्यामि । भो यदि सा तपस्विकन्यका अनभ्यर्थनीया, तत् किं तया दृष्टया ।

पादपेति पादपस्य वृक्षस्य छायायां विरचितं विन्यस्तं यत् वितानम् उल्लोचः चन्द्रातप इत्यर्थः तत्सनाथे तदाच्छादिते इत्यर्थः ।

(४८) अनाप्तेति अनाप्तं न प्राप्तं चक्षुःफलं नयनफलं येन तथोक्तः ।

(४९) कान्तं रम्यम् ।

(५०) आश्रमेति आश्रमस्य ललामभूतां रत्नभूताम् ।

(५१) प्रश्रयं शकुन्तलानुरागस्य उत्साहम् ।

(५२) अनभ्यर्थनीया अप्रार्थनीया ।

राजा। धिङ्मूर्ख !

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः।

नवामिन्दुकलां लोकः केन भावेन पश्यति ? (५३)

न च परिहार्य्ये वस्तुनि (५४) दुष्मन्तस्य मनः प्रवर्त्तते।

विदू। ता कधेहि (क)।

राजा। ललिताप्सरोभवं किल

मुनेरपत्यं तदुज्झिताधिगतम्।

अर्कस्योपरि शिथिलं

च्युतमिव नवमालिकाकुसुमम्॥ (५५)

विदू। [विहस्य]। भो जधा पिण्डोखज्जूरेहिं उब्वे-

---

(क) तत् कथय।

---

(५३) निवारितेति। लोकः उन्मुखः ऊर्द्ध मुखः सन् निवारितनिमेषाभिः नेत्रपङ्क्तिभिः नवां नवोदिताम् इन्दुकलां चन्द्रलेखां केन भावेन अभिप्रायेण पश्यति इन्दुकला कस्यापि प्रार्थनीया न तथापि तं सादरं पश्यन् लोकस्तृप्ति-मायाति तद्वत् शकुन्तलादर्शनेऽपि अस्माकं तृप्तिरिति भावः। अत्र समात् अप्रस्तु-तात् इन्दुकलारूपात् प्रस्तुतायाः शकुन्तलायाः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। पथ्यावक्त्रं वृत्तम्।

(५४) परिहार्य्ये परित्याज्ये। वस्तुनि विषये।

(५५) ललितेति। ललिता सुन्दरी ललितं त्रिषु सुन्दरमित्यमरः। या अप्सराः सुरसुन्दरी मेनकेति भावः तस्या भवतीति तथोक्तं मुनेः कौशिकस्य अपत्य शिथिलं वृन्तात् प्रच्युतम् अर्कस्य तदाख्यवृक्षस्य उपरि च्युतं पतितं नवमालिकायाः पुष्पलतायाः कुसुममिव तया मेनकया उज्झितं परित्यक्तं सत् अधिगतं प्राप्तं लालितं मुनिना कण्वेनेति शेषः। उपमालङ्कारः। आर्य्याजातिः।

ञ्जिदस्स तिन्तिड़ीए सद्धा भोदि तधा अन्तेउरइत्थिआरअण-परिभोइणो भअदो इअं पत्थणा (क) ।

राजा । सखे ! तावदेनां न जानासि येन त्वमेवं अवादीः ।

विदू । तं क्खु रमणीअं णाम, भअदोवि विह्मअं उप्पादेदि (ख) ।

राजा । वयस्य ! किं बहुना,

चित्ते निवेश्य परिकल्पितसर्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ (५६)

विदू । सव्वधा पच्चादेसो (५७) क्खु, सा रूववदीणं (ग) ।

---

(क) भो यथा पिण्डखर्जूरैः उद्वेजितस्य तिन्तिड्यां श्रद्धा भवति, तथा अन्तःपुरस्त्रीरत्नपरिभोगिणो भवत इयं प्रार्थना ।

(ख) तत् खलु रमणीयं नाम यद्भवतोऽपि विस्मयम् उत्पादयति ।

(ग) सर्वथा प्रत्यादेशः खलु सा रूपवतीनाम् ।

---

(५६) चित्ते इति । धातुः प्रजापतेः विभुत्वं सृष्टिसामर्थ्यं निर्माणपाटवमित्यर्थः तस्याः शकुन्तलाया वपुश्च अनुचिन्त्य विभाव्य स्थितस्येति शेषः अन्यथा एककर्त्तृकत्वायोगादिति भावः मम सा कृशाङ्गी शकुन्तला विधिना विधाता परिकल्पिताः कल्पनया निश्चिताः सर्वे योगाः उपादानकारणानीत्यर्थः तान् चित्ते मनसि निवेश्य निधाय रूपोच्चयेन सौन्दर्यराशिना विहिता निर्मिता अतएव अपरा अद्वितीया अन्यविलक्षणेति भावः स्त्रीरत्नसृष्टिः प्रतिभाति प्रतीयमाना भवति । वसन्ततिलकं वृत्तम् । अत्र अभेदे भेदलक्षणातिशयोक्तिरलङ्कारः ।

(५७) प्रत्यादेशः निराकरणं विजितेत्यर्थः प्रत्यादेशो निराकृतिरित्यमरः ।

राजा । इदञ्च मे मनसि वर्तते

अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै-
रनामुक्तं रत्नं, मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं,
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि ? ॥ (५८)

विदू । तेण हि लहुं लहुं (५९) गच्छदु भवं, मा जाव सा कस्सवि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स (६०) हत्थे णिवडिस्सदि (क) ।

राजा । परवती (६१) खलु तत्रभवती, न च सन्निहितगुरुजना ।

---

(क) तेन हि लघु लघु गच्छतु भवान्, मा यावत् सा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति ।

---

(५८) अनाघ्रातमिति । अनघम् अपापम् अदोषमित्यर्थः तस्याः शकुन्तलायाः रूपं न आघ्रातम् अनाघ्रातं केनापि अगृहीतसौरभं पुष्पं कररुहैः नखैः अलूनम् अच्छिन्नं किसलयं नवपल्लवम् अनामुक्तम् अपरिहितम् अङ्गेष्विति शेषः रत्नम् अनास्वादितः अभुक्तः रसः स्वादो यस्य तादृशं नवं नूतनं मधु तथा अखण्डं सम्पूर्णमित्यर्थः पुण्यानां सुकृतानां फलमिव इह भुवि पृथिव्यां कं भोक्तारं समुपस्थास्यति सेविष्यते, न जाने नावगच्छामि तमिति शेषः । उपमालङ्कारः शिखरिणी वृत्तम् । रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ।

(५९) लघु लघु शीघ्रं शीघ्रम् ।

(६०) इङ्गुदीति । इङ्गुदी तापसतरुविशेषः तत्प्रसवो बोध्यः । तथा च इङ्गुदीफलतैलेन चिक्कणं शीर्षं यस्य तथोक्तस्य ।

(६१) परवती पराधीना ।

विद। अध तुह उपरि कीदिसो से चित्तराओ? (क)

राजा। वयस्य! स्वभावादेव अप्रगल्भाः(६२)तपस्विकन्यकाः। तथापि तु

अभिमुखे मयि संहृतमीक्षितम्,
हसितमन्यनिमित्तकथोदयम्।
विनयवारितवृत्ति रतस्तया
न विवृतो मदनो न च संवृतः॥ (६३)

विदू। [विहस्य]। किं दिट्ठिमेत्तेण ज्जेव भवदी अङ्कं, आरोहदु? (ख)।

राजा। सखीभ्यां मिथः प्रस्थाने पुनः सलीलया तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः (६४)। तथा हि

(क) अथ तवोपरि कीदृशोऽस्याश्चित्तरागः?

(ख) किं दृष्टिमात्रेणैव भवतोऽङ्कमारोहतु?

(६२) अप्रगल्भाः अचपलाः।

(६३) अभिमुखे इति। मयि अभिमुखे सम्मुखवर्त्तिनि सति ईक्षितं दृष्टं मदवलोकनमित्यर्थः संहृतं संवृतं तयेति शेषः। तथा अन्येन निमित्तेन हेतुना कथाया उदयो यत्र तत् यथा स्यात् तथा हसितं तयेति शेषः। अतः कारणात् तथा विनयेन शिष्टाचारेण वारिता निषिद्धा वृत्तिर्वर्त्तनं प्रकाश इति यावत् यस्य तथाभूतः मदनः कामः न विवृतः न प्रकटितः न च संवृतः नापि गोपितः। द्रुतविलम्बितं वृत्तं द्रुतविलम्बितमाह नभौ भराविति लक्षणात्।

(६४) सखीभ्यामिति। सखीभ्यां सहेत्यर्थः मिथः परस्परम्। सलीलया सविलासया। भूयिष्ठं प्रभूतं यथा तथा आविष्कृतः प्रकटितः भावः अनुरागः।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ (६५)

विदू । गहीदपाधेओ (६६) किदोसि तए, अदो अणुरक्कं तवोवणं त्ति तक्केमि (क) ।

राजा । सखे ! तपस्विभिः कैश्चित् परिज्ञातोऽस्मि, चिन्तय तावत्, केनापदेशेन (६७) पुनराश्रमपदं गच्छामः ।

विदू । को अवरो अवदेसो, णं भवं राआ (ख) ।

राजा । ततः किम् ?

विदू । णीवारच्छट्ठभाअं तावसा मे उवहरन्तु (६८) त्ति (ग)

(क) गृहीतपाथेयः कृतोऽसि तया, अतोऽनुरक्तं तपोवनमिति तर्कयामि ।

(ख) कोऽपरोऽपदेशः, ननु भवान् राजा ।

(ग) नीवारषष्ठभागं तापसा मे उपहरन्तु इति ।

(६५) दर्भाङ्कुरेणेति । तन्वी कृशाङ्गी शकुन्तला कतिचिदेव पदानि गत्वा अकाण्डे सहसा दर्भाङ्कुरेण कुशसूच्या चरणः क्षतः विद्ध इति उक्त्वेति शेषः स्थिता, तथा द्रुमाणां तरूणां शाखासु असक्तमपि अलग्नमपि वल्कलं विमोचयन्ती सती विमोचनव्याजेनेति भावः विवृत्तं प्रत्यावृत्तं मद्दर्शनार्थेति भावः वदनं यस्याः तथाभूता आसीच्च । अत्र अपह्नुतिरलङ्कारः । विमोचनच्छलेन प्रकृतस्य विवृत्तवदनत्वस्य गोपनात् तदुक्तं प्रकृतं प्रतिषिध्य अन्यस्थापनं स्यात् अपह्नुतिरिति । वसन्ततिलकं वृत्तम् ।

(६६) गृहीतेति । गृहीतं पाथेयं सम्बलं येन तथाभूतः सम्बलञ्च तन्मुखविवर्त्तनादीति बोध्यम् ।

(६७) अपदेशेन छलेन ।

(६८) नीवारेति । नीवाराणां धान्यविशेषाणां षष्ठं भागम् उपहरन्तु ददतु ।

राजा । मूर्ख ! अन्यमेव भागधेयमेते तपस्विनो मे निर्वपन्ति (६९) यो रत्नराशीनपि विहाय अभिनन्द्यते। पश्य

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ (७०)

नेपथ्ये । हन्त ! सिद्धार्थौ स्वः (७१)

राजा । [ कर्णं दत्त्वा । ] अये ! प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

[प्रविश्य । दौवारिकः ।] जअदु जअदु भट्टा, एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा (क) ।

राजा । अविलम्बं प्रवेशय तौ ।

दौवा । जं भट्टा आणवेदि । [इति निष्क्रम्य ऋषिकुमाराभ्यां सह पुनः प्रविश्य ।] इदो इदो भवन्ता (ख) ।

उभौ । [राजानं विलोकयतः ।]

(क) जयति जयति भर्त्ता, एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिमुपस्थितौ ।

(ख) यत् भर्त्ता आज्ञापयति । इत इतो भवन्तौ ।

(६९) भागधेयं करं भागधेयः करो बलिरित्यमरः । निर्वपन्ति ददति । यः भागधेयः सुकृतांशरूप इति भावः ।

(७०) यदिति । वर्णेभ्यः ब्राह्मणादिभ्यः वर्णाः स्युर्ब्राह्मणादय इत्यमरः । यत् धनम् इति शेषः उत्तिष्ठति लब्धं भवति इत्यर्थः तद्धनं नृपाणां राज्ञां क्षयि नश्वरम् । आरण्यकाः अरण्यवासिनः तापसाः नः अस्मभ्यम् अक्षय्यम् अविनश्वरं तपसः षड्भागं षष्ठांशं ददति अर्पयन्ति एव ।

(७१) सिद्धार्थौ कृतार्थौ । स्वः भवावः ।

एकः। अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः, अथवा उपपन्नम् (७२)एतदस्मिन् ऋषिकल्पे राजनि। कुतः

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥ (७३)

द्वितीयः। सखे! अयं स बलभित्सखो (७४) दुष्मन्तः?

प्रथमः। अथ किम्।

द्वितीयः। तेन हि

नतच्चित्रं, यदयमुदधिश्यामसीमां धरित्रीम्
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।

(७२) विश्वसनीयता निःशङ्कनीयता। उपपन्नं युक्तम्।

(७३) अस्य राजर्षित्वं प्रतिपादयति अध्याक्रान्तेति। अमुनापि सर्वभोग्ये सर्वभोगास्पदे आश्रमे वसतिः अध्याक्रान्ता आश्रिता। अयमपि रक्षायोगात् प्रजापालनजनितात् धर्मात् प्रत्यहं तपः सञ्चिनोति करोति। अस्यापि वशिनः जितेन्द्रियस्य चारणानां कुशीलवानां द्वन्द्वैः मिथुनैः गीतः कीर्त्तितः पुण्यः पवित्रः केवलं राजपूर्वः राजशब्दपूर्वकः मुनिरिति शब्दः राजर्षिरिति शब्दः मुहुः पुनः-पुनः द्यां स्वर्गम् आकाशं वा स्पृशति गच्छति। काव्यलिङ्गमलङ्कारः। मन्दाक्रान्तावृत्तम्।

(७४) बलभित्सखः बलभिदः इन्द्रस्य सखा मित्रम्।

(७५) नैतच्चित्रमिति। नगरस्य परिघौ इव द्वारार्गलौ इव प्रांशू दीर्घौ बाहू भुजौ यस्य तादृशः अयम् एकः अद्वितीय इत्यर्थः उदधिः समुद्र एव श्यामः सीमा यस्य तथोक्तां कृत्स्नां समग्रां धरित्रीं पृथ्वीं यत् भुनक्ति एतत् न चित्रं न आश्चर्यम्। यतः दैत्यैः असुरैः सक्तं लग्नं वैरं विद्वेषो येषां तथाभूताः सुरा देवाः

आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैः
अस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ (७५)

उभौ। [उपगम्य।] विजयस्व राजन्!

राजा। [आसनादुत्थाय।] अभिवादये (७६) भवन्तौ।

उभौ। स्वस्ति भवते [इति फलानि उपनयतः।] (७७)

राजा। [सप्रणामं परिगृह्य।] आगमनप्रयोजनं श्रोतुमिच्छामि।

उभौ। विदितो भवानिहस्थस्तपस्विभिः, ते च भवन्तम् अभ्यर्थयन्ति।

राजा। किम् आज्ञापयन्ति?

उभौ। तत्रभवतः कण्वस्य कुलपतेः असान्निध्यात् रक्षांसि न इष्टिविघ्नम् उत्पादयन्ति, तत् कतिपयदिवसमात्रं सारथिद्वितीयेन भवता सनाथीक्रियताम् आश्रम इति (७८)

राजा। अनुगृहीतोऽस्मि।

विदू। [अपवार्य।] एस दाणिं भअदो अणुऊलो गलत्थो (क)।

---

(क) एष इदानीं भवतोऽनुकूलो गलहस्तः।

---

समितिषु संग्रामेषु अस्य राज्ञः अधिज्ये मौर्वीयुक्ते धनुषि पौरुहूते ऐन्द्रे वज्रे च विजयम् आशंसन्ते आकाङ्क्षन्ति। उपमाकाव्यलिङ्गयोः संसृष्टिः। मन्दाक्रान्तावृत्तम्।

(७६) अभिवादये प्रणमामि।

(७७) उपनयतः अर्पयतः।

(७८) असान्निध्यात् अनुपस्थितेः। इष्टिविघ्नं यज्ञव्याघातम्। सनाथीक्रियतां नाथयुक्तः क्रियताम्।

राजा। [स्मितं कृत्वा।] रैवतक! मद्वचनात् उच्यतां सारथिः सबाणकार्मुकं रथम् उपस्थापय इति।

दौवा। जं देवो आणवेदि (क)। [इति निष्क्रान्तः।]

उभौ। [सहर्षम्।]

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि।

आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः॥ (७९)

राजा। [सप्रणामम्।] गच्छतां भवन्तौ, अहम् अनुपदम् (८०) आगत एव।

उभौ। विजयस्व। [इति निष्क्रान्तौ।]

राजा। माधव्य! अप्यस्ति ते कुतूहलं शकुन्तलादर्शनं प्रति?

विदू। पढमं सपरिबाधं आसी, सम्पदं रक्खसवुत्तन्तेण सपरिबाधं (ख)। (८१)

राजा। मा भैषीः ननु मत्समीप एव वर्त्तिष्यसे।

(क) यद्देव आज्ञापयति।

(ख) प्रथममपरिबाधमासीत्। साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम्।

(७९) अनुकारिणीति। पूर्वेषां पूर्वपुरुषाणां पूरुप्रभृतीनाम् अनुकारिणि तुल्यकार्य्यकारिणि त्वयि इदम् अस्मदभयदानम् इत्यर्थः युक्तरूपम् अनुरूपम्। खलु यतः पौरवाः पूरुवंशीयाः आपन्नानां विपन्नानाम् अभयसत्रेषु अभयदानयज्ञेषु दीक्षिताः निरता इत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। पथ्यावक्त्रं वृत्तम्।

(८० अनुपदं पश्चादित्यर्थः।

(८१) अपरिबाधं बाधाशून्यं निर्विघ्नम् इत्यर्थः। सपरिबाधं सविघ्नम्।

विदू। एष तुह रथचक्करक्खीभूदोह्मि (८२) जइ ण कोवि आअच्छिअ विग्घं करेदि (क)।

[ प्रविश्य। दौवारिकः। ] जअदु जअदु भट्टा, सज्जो रधो भत्तुणो विजअप्पआणं अवेक्खदि, एस उण णअरादो देवीणं आणत्तिहरो (८३) करभओ आअदो (ख)।

राजा। [ सादरम्। ] किम् अम्बाभिः प्रेषितः?

दौवा। अध इं (ग)।

राजा। तेन हि प्रवेश्यताम्।

दौवा। तह। [ इति निष्क्रम्य, पुनः करभकेण सह प्रविश्य ]।

करभअ! एसो भट्टा, उवसप्पदु भवं (घ)।

करभकः। [उपसृत्य प्रणम्य च। ] जअदु जअदु भट्टा, देवीओ आणवेन्ति (ङ)।

(क) एष तव रथचक्ररक्षीभूतोऽस्मि, यदि न कोऽप्यागत्य विघ्नं करोति। युध्यतः पुरुषस्य कश्चिच्चक्ररक्षकोऽपेक्षते, स एवाहं तव भविष्यामीत्यर्थः।

(ख) जयति जयति भर्त्ता, सज्जो रथो भर्त्तुर्विजयप्रयाणमपेक्षते, एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः।

(ग) अथ किम्।

(घ) तथा। करभक! एष भर्त्ता, उपसर्पतु भवान्।

(ङ) जयति जयति भर्त्ता, देव्य आज्ञापयन्ति।

(८२) रथचक्रेति रथचक्रस्य रक्षीभूतः रक्षकः।

(८३) आज्ञप्तिहरः आज्ञावाहकः।

राजा। किम् आज्ञापयन्ति ?

करभ। आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो (८४) णाम उववासो भविस्सदि, तहिं दीहाउणा अवस्सं अह्मे सम्भावइदव्वं (८५) त्ति (क)।

राजा। इतस्तपस्विनां कार्य्यम्, इतो गुरुजनाज्ञा, उभयमपि अनतिक्रमणीयं, तत् किमत्र प्रतिविधेयम् (८६)।

विदू। भो तिसङ्कु (८७) विअ अन्तरा चिट्ठ (ख)।

राजा। सत्यम् आकुलीभूतोऽस्मि।

---

(क) आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति, तत्र दीर्घायुषा अवश्यं वयं सम्भावयितव्या इति।

(ख) भोस्त्रिशङ्कुरिव अन्तरा तिष्ठ।

---

(८४) पुत्रेति पुत्रेण दास्यमानानां पिण्डानां पालनं रक्षणं यस्मात् तथाभूतः।

(८५) सम्भावयितव्याः सम्मानयितव्याः सन्निधौ सन्निधानेनेति भावः।

(८६) प्रतिविधेयं कर्त्तव्यम्।

(८७) त्रिशङ्कुरिवेति। पुरा किल त्रिशङ्कुर्नाम सूर्य्यवंशीयः कश्चित् नृपतिः सशरीरः स्वर्गं जिगमिषुः एकदा गुरुं वशिष्ठम् उपागच्छत्। तेन तु न तवास्मिन् यागेऽधिकार इति प्रत्याख्यातः गुरुपुत्रान् उपागात्। ते च मूर्ख ! गुरुं त्यक्त्वा अस्मान् यदुपागच्छः ततश्चाण्डालत्वं गच्छेत्यभिशेपुः। राजा गुरुणा गुरुपुत्रैश्च परित्यक्तः सुभृशं दुःखितः गुरुद्वेषिणं विश्वामित्रं जगाम। स तु ऋषिः वशिष्ठविद्वेषितया तं याज्यं परिगृह्य तदभिमतं यागम् अकरोत्। त्रिशङ्कुश्च यज्ञप्रभावेण सशरीर एव स्वर्गं चचाल। स्वर्गद्वारमागतश्च तं देवराजो गुरुद्वेषीति निर्भर्त्स्य अन्तरीक्षमपातयत्। पतंश्च गुरो कौशिक ! परित्राहि पतन्तं माम् इत्युच्चैर्वदन् विश्वामित्रेण न त्वं पत अत्रैव तिष्ठेतिभाषितः गगनान्तराल एव तस्थौ न भूमिं न च स्वर्गं प्रापेति गाथा अत्र अनुसन्धेया।

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैलेः स्रोतः स्रोतोवहां यथा ॥ (८८)

[विचिन्त्य ।] सखे माधव्य ! त्वमपि अस्माभिः पुत्र इव गृहीतः, स भवान् इतः प्रतिनिवृत्त्य तपस्विकार्य्यव्यग्रताम् अस्माकम् आवेद्य तत्रभवतीनां पुत्रकार्य्यम् अनुष्ठातुमर्हति ।

विदू । भो ! मा रक्खसभीरुअं मं अवगच्छ (क) ।

राजा । [स्मितं कृत्वा ।] भो महाब्राह्मण ! कथमिदं त्वयि सम्भाव्यते ।

विदू । तेण हि राआणुए विअ गच्छिदुं इच्छेमि (ख) ।

राजा । ननु तपोवनोपरोधः परिहरणीय इति सर्वानेव आनुयात्रिकांस्त्वयैव (८९) सह प्रेषयिष्यामि ।

विदू । [सगर्वम् ।] जुअराओम्हि दाणिं संवुत्तो (ग) ।

राजा । [आत्मगतम् ।] चपलोऽयं ब्राह्मणवटुः कदाचित्

(क) भो मा राक्षसभीरुकं मामवगच्छ ।

(ख) तेन हि राजानुज इव गन्तुमिच्छामि ।

(ग) युवराजोऽस्मीदानीं संवृत्तः ।

(८८) कृत्ययोरिति । कृत्ययोः कार्य्ययोः मातृकार्य्यतापसकार्य्ययोरिति यावत् भिन्नदेशत्वात् मातृकार्य्यं राजधान्यां तापसकार्य्यं तपोवनेषु इति देशभेदात् मे मम मनः पुरः अग्रतः शैलैः प्रतिहतं व्याहतं स्रोतोवहां सरितां स्रोतः यथा प्रवाह इव द्वैधीभवति द्विधा भूत्वा द्वयोरेव चलति । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(८९) तपोवनोपरोधः आश्रमबाधा । परिहरणीयः यथा न भवति तथा करणीय इत्यर्थः । अनुयात्रिकान् अनुचरान् ।

इमामस्मत्प्रार्थनाम् अन्तःपुरिकाभ्यो (९०) निवेदयेत्। भवतु एवं तावद्वक्ष्यामि। [विदूषकस्य हस्तं गृहीत्वा। प्रकाशम्।] सखे माधव्य! ऋषिगौरवादाश्रमपदं प्रविशामि, न खलु १ त्वमेव तापसकन्यायाम् अभिलाषो मे। पश्य

क्व वयं, क्व परोक्षमन्मथो
मृगशावैः सह वर्द्धितो जनः।
परिहासविजल्पितं सखे!
परमार्थेन न गृह्यतां वचः॥ (९१)

विदू। एवम्मेदं (क)।

राजा। माधव्य! त्वमपि स्वनियोगम् अनुतिष्ठ, अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि।

इति निष्क्रान्ताः सर्वे।

द्वितीयोऽङ्कः।

---

(क) एवमिदम्।

---

(९०) अस्मत् प्रार्थनाम् अस्माकं शकुन्तलानुरागमित्यर्थः। अन्तःपुरिकाभ्यः अन्तःपुरवासिनीभ्यः देवीभ्य इत्यर्थः।

(९१) क्व इति। हे सखे! वयं कामपरायणा विषयिण इति भावः क्व? मृगशावैः मृगशिशुभिः सह वर्द्धितः प्रतिपालितः अतएव परोक्षः अपरिज्ञात इत्यर्थः मन्मथः कामः यस्य तथाविधो जनः शकुन्तलारूप इति भावः क्व? कामिनो निष्कामस्य च समागमोऽसम्भव इति भावः। अतः परिहासेन कौतुकेन विजल्पितं कथितं वचः शकुन्तलासम्बद्धं वचनमित्यर्थः परमार्थेन सत्येन न गृह्यतां सत्यतया मा विश्वसिहीति यावत् सुन्दरीहनम् अयुजीयंदि सौ जसौ गुजौ सभराजौ यदि सुन्दरी तदेति लक्षणात्।

———

# तृतीयोऽङ्कः ।



ततः प्रविशति कुशानादाय यजमानशिष्यः ।

शिष्यः । [विचिन्त्य सविस्मयम् ।] अहो ! महाप्रभावो राजा दुष्मन्तः । येन प्रविष्टमात्र एव आश्रमं तत्रभवति सारथिद्वितीये राजनि निरुपप्लवानि(१) नः कर्माणि संवृत्तानि ।

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।

हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति ॥ (२)

यावत् एतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि । [परिक्रम्य अवलोक्य च । (आकाशे)] प्रियंवदे ! कस्य इदम् उशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते ? [श्रुतिम् अभिनीय ।] किं कथयसि, आतपलङ्घनाद् बलवदसुस्थशरीरा शकुन्तला, तस्याः शरीरनिर्वापणायेति ? प्रियंवदे ! यत्नादुपचर्य्यतां, सा हि तत्रभवतः कुलपतेर्द्वितीयम् उच्छ्वसितम् । अहमपि तावद् वैतानिकं शान्त्युदकम् अस्या एव गौतमीहस्ते विसर्जयामि (३) । [इति निष्क्रान्तः ।]

विष्कम्भकः ॥

---

(१) निरुपप्लवानि निरुपद्रवाणि ।

(२) केति । हि यतः स राजा बाणसन्धाने धनुषि शरसंयोगे का कथा किं वक्तव्यम् ? दूरतः दूरात् धनुषः हुङ्कारेणेव ज्याशब्देनैव मौर्वीस्वनेनैव विघ्नान् व्यपोहति निरस्यति । उत्प्रेक्षालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(३) ऋत्विग्भ्यः याजकेभ्यः उपाहरामि अर्पयामि । आतपलङ्घनात् सौरतापाभिभवात् । शरीरनिर्वापणाय शरीरस्य तापशान्तये । उपचर्य्यतां सेव्यतां

ततः प्रविशति समदनावस्थो राजा।

राजा। [ सचिन्तं निश्वस्य, ]

जाने तपसो वीर्य्यं, सा बाला परवतीति मे विदितम्।

न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम्॥(४)

भगवन् मन्मथ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यम् (५)

एतत्? [स्मृत्वा]। आं ज्ञातम्।

अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।

त्वमन्यथा मन्मथ! मद्विधानां भस्मावशेषः कथमेवमुष्णः॥(६)

अपि च। त्वया चन्द्रमसा चातिविश्वसनीयाभ्याम् अभिसन्धीयते कामिसार्थः (७)। कुतः

---

शुश्रूष्यताम् इत्यर्थः। उच्छ्वसितं जीवनम् वैतानिकं यज्ञीयम्। विसर्जयामि प्रेषयामि।

(४) जाने इति। तपसः वीर्य्यं सामर्थ्यं जाने वेद्मि एतेन बलात्कारस्तत्र न योज्य इति भावः। सा बाला शकुन्तला परवती पराधीना गुरोरधीना इति यावत् इति मे मम विदितं ज्ञातम् एतेन तस्या अनुरागेऽपि स्वयंवरणासामर्थ्यम् इति भावः। तर्हि त्यज्यतामेष तदर्थः प्रयास इत्याशङ्क्याह न चेति निम्नात् सलिलमिव ततः शकुन्तलायाः मे मम हृदयं न च निवर्त्तते। नाहं तस्या मनो निवर्त्तयितुं शक्नोमि इति भावः। उपमालङ्कारः। आर्य्यावृत्तम्।

(५) तैक्ष्ण्यम् उग्रता।

(६) अद्यापीति। हे मन्मथ! हरस्य कोपवह्निः कोपानलः अम्बुराशौ समुद्रे और्व इव वाड़वानल इव त्वयि अद्यापि ज्वलति, अन्यथा नो चेत् इत्यर्थः त्वं भस्मावशेषः भस्मीभूतोऽपि मद्विधानां मादृशानां कथम् एवम् उष्णः दुःसहताप इत्यर्थः। अत्र काव्यलिङ्गानुप्राणित उपमालङ्कारः। उपजातिवृत्तम्।

(७) अभिसन्धीयते प्रतार्य्यते। अतिसन्धीयते इति पाठान्तरम्। कामिसार्थः विरहिगणः।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः
द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैः
त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ (८)

अथवा

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ (९)
भगवन् एवमुपालब्धस्य ते न मां प्रति अनुक्रोशः । (१०)

वृथैव सङ्कल्पशतैरजस्रमनङ्ग ! नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥ (११)

---

(८) तवेति । तव कुसुमशरत्वम् इन्दोः चन्द्रस्य शीतरश्मित्वं शीतकिरणत्वम् इदं द्वयं मद्विधेषु विरहिषु इत्यर्थः । अयथार्थम् अकुसुमशरत्वम् उष्णकिरणत्वञ्चेति भावः दृश्यते । यतः इन्दुः चन्द्रः हिमगर्भैः हिमानि गर्भे येषां तथोक्तैः मयूखैः किरणैः अग्निं विसृजति वर्षति । त्वमपि कुसुमबाणान् कौसुमान् शरान् वज्रसारीकरोषि वज्रवत् तीक्ष्णान् कृत्वा निक्षिपसि इति भावः । अत्र वाक्यार्थहेतुकं काव्यलिङ्गम् । मालिनीवृत्तम् ।

(९) अनिशमिति । मकरकेतुः कामः यदि तां मदिरो मत्तखञ्जनः तद्वत् आयते दीर्घे नयने यस्याः तादृशीं तां शकुन्तलाम् अधिकृत्य अङ्गीकृत्य प्रहरति विध्यति माम् इति शेषः इत्येवं स्यादिति शेषः तदा अनिशम् अनवरतं मनसः रुजं पीड़ाम् आवहन् उत्पादयन् अपि मे मम अभिमतः । यथा अहं तदर्थम् एवं कामार्त्तः तथा सापि यदि मदर्थमेवं स्यात् तदा तत्पीड़नं युक्तमिति भावः । आर्य्याजातिः ।

(१०) हे भगवन् सर्वशक्तिमन् काम ! एवम् इत्थम् उपालब्धस्य तिरस्कृतस्य मयेति शेषः ते तव मां प्रति न अनुक्रोशः अनुकम्पा ।

(११) वृथेति । हे अनङ्ग ! मया अजस्रम् अविरतं सङ्कल्पशतैः मनःकल्पितैः प्रियासमागमादिभिरित्यर्थः वृथैव निरर्थकमेव अतिवृद्धिं नीतः प्रापितः

[सखेदं परिक्रम्य] । क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नं (१२) आत्मानं विनोदयामि, न च प्रियादर्शनादृते शरणम् (१३) अन्यत् । यावदेनामन्विष्यामि । [ऊर्द्धमवलोक्य] । इमामुग्रतपां वेलां प्रायेण लतावलयवत्सु (१४) मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति, भवतु तत्रैव तावद्गच्छामि। [परिक्रम्यावलोक्य च] । अनया बालपादपवीथ्या (१५) सुतनुरचिरं गतेति तर्कयामि । कुतः

सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः ।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ (१६)

अपि यो यस्य वृद्धिमादधाति तं स प्रत्युपकारेण प्रीणयति इति एष धर्मः तव तु तद्वैपरीत्यमिति मम त्वद्दर्शनाभिप्रायस्य निरर्थकत्वमिति भावः । किं तन्मया कृतं येनैव माक्षिपसि इत्याशङ्क्याह आकर्ण्येति श्रवणोपकण्ठे श्रवणसन्निधौ आकर्णम् इत्यर्थः चापं धनुः आकृष्य मयि एव वर्द्धयितरि एव इति भावः तव बाणमोचः शरनिक्षेपः युक्तः उचितः ? नैव इत्यर्थः । काव्यलिङ्गमलङ्कारः ।

(१२) खिन्नं सन्तप्तम् ।

(१३) शरणं त्राणकारणम् । शरणं गृहरक्षित्रोरित्यमरः ।

(१४) उग्रतपां तीव्रतापवतीम् । वेलां समयं मध्यं दिनमित्यर्थः । लतावलयवत्सु व्रततिमण्डलवेष्टितेषु ।

(१५) बालपादपवीथ्या नवतरुराजिपार्श्ववर्त्तिना मार्गेण इति यावत् ।

(१६) सम्मीलन्तीति । तया सुतन्वा अवचितानि पुष्पाणि येषां तथोक्ताः अमी बन्धनकोषाः वृन्तगर्भाः न तावत् सम्मीलन्ति न मुद्रिता भवन्ति । अमी च किसलयानां नवपल्लवानां छेदाः क्षीरेण निर्य्यासेन स्निग्धा मसृणाः न तु शुष्का इति भावः दृश्यन्ते । आर्य्याजातिः ।

[स्पर्शं रूपयित्वा विलोक्य]। अहो प्रवातसुभगो (१७) ऽयं वनोद्देशः ।

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः ॥ (१८)

[विलोक्य]। हन्तास्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम् । तथाहि

अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ (१९)

यावद्विटपान्तरेणावलोकयामि। [तथा कृत्वा सहर्षम्]। अये लब्धं नेत्रनिर्वाणम् । एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते ( २० ) ।

(१७) प्रवातेति प्रकृष्टो वातो यत्र तथाभूतः अतएव सुभगः मनोरमः ।

(१८) शक्य इति। अरविन्दसुरभिः पद्मसौरभवान् मालिनीतरङ्गाणां कणान् वहतीति तथाभूतः पवनः अनङ्गेन कामेन तप्तैः अङ्गैः गाढ़म् आलिङ्गितुं सेवितुमित्यर्थः शक्यः योग्य इत्यर्थः। आर्य्याजातिः।

(१९) अभ्युन्नतेति। पुरस्तात् अग्रतः अभ्युन्नता अभ्युन्नता, पश्चात् पृष्ठतः गलच्चेपदेशे इति भावः जघनयोर्जङ्घयोः गौरवात् भारवत्त्वात् अवगाढ़ा अवनता अभिनवा सद्योनिर्हितेति भावः पदानां पदविक्षेपाणां पङ्क्तिः अस्य लतामण्डपस्य द्वारे दृश्यते। आर्य्याजातिः।

(२०) नेत्रनिर्वाणं नयनानन्दः। मनोरथप्रिया मनोरथेन मनःसङ्कल्पेन प्रिया न तु तत्त्वतः अपरिगृहीतत्वादिति भावः। सकुसुमेति कुसुमास्तरणं पुष्पशय्या तेन सहितं सकुसुमास्तरणम्। शिलापट्टं पाषाणफलकम्। उपास्यते सेव्यते।

भवतु लताव्यवहितः शृणोमि विश्वस्तकथितानि (२१) आसाम्। [इति विलोकयन् स्थितः]।

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला।

सख्यौ। [उपवीज्य]। हला सउन्तले! अवि सुहाअदि दे णलिणीवत्तवादो? (क)।

शकु। [सखेदम्]। किं वीजअन्ति मं पिअसहीओ? (ख)।

सख्यौ। [सविषादं परस्परमवलोकयतः]।

राजा। बलवदसुस्थशरीरा (२२) अत्रभवती दृश्यते। [सवितर्कम्]। तत्किमयमातपदोषः स्यात् उत यथा मे मनसि वर्त्तते?। [साभिलाषं निर्वर्ण्य]। अथवा कृतं सन्देहेन (२४)

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।

(क) अयि शकुन्तले! अपि सुखायते ते नलिनीपत्रवातः?

(ख) किं वीजयतो मां प्रियसख्यौ?

---

(२१) विश्वस्तकथितानि निःशङ्कवचांसि रहस्यवचनानीति यावत्।

(२२) बलवदिति बलवत् अत्यर्थम् असुस्थं शरीरं यस्याः तादृशी।

(२३) आतपदोषः सौरतापातिशयविकृतिः।

(२४) कृतं सन्देहेन, सन्देहो नैव कार्य्य इत्यर्थः; कृतमित्यलमर्थे अव्ययम्।

(२५) स्तनेति। प्रियायाः शकुन्तलायाः इदं वपुः स्तनयोः न्यस्तम् उशीरं

समस्तापः कामं मनसिजनिदाघप्रसरयोः
न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ (२५)

प्रियं । [जनान्तिकम्] । अणसूए ! तस्स राएसिणो पढ़मदंसणादो आरम्भिम पज्जुस्सुअमणा सउन्तला, ण क्खु से अण्णणिमित्तो आतङ्को (२६) भवे (क) ।

अन । सहि ! मम्मवि एआरिसी आसङ्का हिअअस्स, भोदु पुच्छिस्सं दाव णम् [प्रकाशम्] । सहि ! पुच्छिदव्वासि किम्पि, बलीओ क्खु दे अङ्गाणं सन्दावो (ख) ।

राजा । वक्तव्यमेव ।

(क) अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमनाः शकुन्तला, न खल्वस्या अन्यनिमित्त आतङ्को भवेत् ।

(ख) सखि ! ममापि एतादृशी आशङ्का हृदयस्य, भवतु प्रक्ष्यामि तावदेनाम् । सखि ! प्रष्टव्यासि किमपि, बलीयान् खलु तेऽङ्गानां सन्तापः ।

वीरणाख्यतृणमूलानुलेपनं यस्मिन् तथोक्तं तथा प्रशिथिलं मृणालमेव एकमद्वितीयं वलयं यस्य तथाभूतम् अतएव साबाधम् आबाधया सम्यक् पीड़या सहितं तथात्वेन प्रतीयमानमिति भावः तदपि तथापि कमनीयं मनोहरम् । अथवा तदिति वपुरित्यस्य विशेषणं तत् पूर्वं निर्बाधमिति यावत् इदं वपुः साबाधमपि सम्यक् बाधासहितत्वेन प्रतीयमानमपीत्यर्थः । कमनीयं मनोहरम् । मनसिज-निदाघप्रसरयोः कामोष्णवेगयोः तापः कामं सम्यक् समः तुल्यः तु किन्तु ग्रीष्मस्य युवतिषु विषयेषु अपराद्धम् अपराधः सन्ताप इति यावत् एवं सुभग मनोहरं कमनीयतासम्पादकमित्यर्थः न । शिखरिणीवृत्तम् ।

(२६) आतङ्कः सन्तापः ।

शशिकरविशदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥ (२७)

शकु । [पूर्वार्द्धेन शयनादुत्थाय] । हला ! भण जं वत्तु-कामासि (ग) ।

अन । हला सउन्तले ! अलब्भन्तरा (२८) अह्मे दे मणोगदस्स वुत्तन्तस्स, किन्तु जादिसो इदिहासकथाणु-बन्धेसुं कामिअणाणं अवत्था सुणीअदि तादिसो तुह त्ति तक्केमि, ता कधेहि किं णिमित्तं दे अअं आआस त्ति, विआरं परमत्थदो अआणिअ अणारम्भो (२९) किल पदो-आरस्स (ख) ।

(ग) अयि ! भण यद्वक्तुकामासि ।

(ख) अयि शकुन्तले ! अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य, किन्तु याद्दशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते ताद्दशी तवेति तर्कयामि, तत् कथय किं निमित्तस्तेऽयमायास इति, विकारं परमार्थतोऽज्ञात्वा अनारम्भः किल प्रतीकारस्य ।

(२७) शशीति । तथाहि अस्याः शकुन्तलयाः शशिकरा इव चन्द्रकिरणा इव विशदानि शुभ्राणि मृणालेन निर्माणं येषां ताद्दशानि करभूषणविशेषाः श्यामिकया मालिन्येन सन्तापजनितकालिमेत्यर्थः भिन्नानि भेदं गतानि संक्रान्तानीत्यर्थः । अतएव दुःसहं निदाघं तापं शंसन्ति सूचयन्तीति तथोक्तानि । आर्य्याजातिः ।

(२८) अलब्धान्तराः अलब्धम् अप्राप्तम् अन्तरं तत्त्वं याभिः तथोक्ताः मर्मानभिज्ञा इत्यर्थः ।

(२९) आयासः सन्तापः । विकारं प्रकृतेरन्यथाभावं व्याधिमिति यावत् परमार्थतः तत्त्वतः । अनारम्भः अनुद्योगः ।

राजा । अनसूययापि मदीयस्तर्को(३०)ऽवगतः ।

शकु । बलीओ मे आआसो, ण सक्कणोमि सहसा णिवेदिदुं (क) ।

प्रियं । सुट्ठु क्खु एषा भणादि, किं एदं अत्तणो उअ-द्दवं (३१) णिगूहसि ? अणुदिअसं क्खु परिहीअसि अङ्गेसुं, लावण्णमई छाया केवलं तुमं ण मुञ्चदि (ख) ।

राजा । अवितथ(३२)माह प्रियंवदा । तथाहि

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं,
मध्यः क्लान्ततरः, प्रकामविनतावंसौ, छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥(३३)

---

(क) बलीयान् मे आयासः, न शक्नोमि सहसा निवेदयितुम् ।

(ख) सुष्ठु खल्वेषा भणति, किमेतमात्मन उपद्रवं निगूहसि ? अनुदिवसं खलु परिहीयसेऽङ्गेषु, लावण्यमयी छाया केवलं त्वां न मुञ्चति ।

(३०) मदीयस्तर्कः ममाभिप्राय इत्यर्थः ।

(३१) उपद्रवं क्लेशम् ।

(३२) अवितथं सत्यम् ।

(३३) क्षामेति । आननं वदनं क्षामक्षामौ क्षीणप्रकारौ प्रकारे द्विर्भावः । कपोलौ गण्डौ यस्य तथोक्तम् । उरः वक्षःस्थलं काठिन्येन दार्ढ्येन मुक्तौ स्तनौ यत्र तादृशम् । मध्यः कटिदेशः क्लान्ततरः अतिशयेन क्लान्तः । अंसौ स्कन्धदेशौ प्रकामं सम्यक् यथातथा विनतौ अवनतौ, सर्वत्र क्षीणत्वादिति भावः । छविः देहप्रभा पाण्डुरा पाण्डुवर्णा रक्तश्वेतेति यावत् । अतः मदनेन ग्लाना ग्लानिं प्राप्तं नीता इयं शकुन्तला पत्राणां शोषणेन शोषणकारिणा मरुता दक्षिणानि-

शकु। [निश्वस्य] कस्स वा अस्सस्स कधइस्सं किन्तु आआसहेतुआ वो भविस्सं (क)।

उभे। सहि ! अदो ज्जेव णिब्बन्धो (३४) सिणिद्धजण-संविभत्तं क्खु दुक्खं सज्जवेअणं भोदि (ख)।

राजा। पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि॥ (२५)

शकु। जदो पहुदि तवोवणरक्खिदा सो राएसी मम दंसणपधं गदो (ग)। [इत्यर्द्धोक्ते न लज्जां नाटयति]।

(क) कस्य वा अन्यस्य कथयिष्यामि, किन्तु आयासहेतुका वो भविष्यामि।

(ख) सखि ! अतएव निर्बन्धः, स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति।

(ग) यतः प्रभृति तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः।

लेन सृष्टा माधवीलतेव शोच्या च प्रियदर्शना च आलक्ष्यते दृश्यते। अत्र काव्यलिङ्गानुप्राणितोपमा। शार्दूलविक्रीड़ितं वृत्तम्।

(३४) निर्बन्धः आग्रहातिशयः।

(३५) पृष्टेति। समं दुःखं सुखञ्च यस्य तथाभूतेन जनेन सखीजनेन इत्यर्थः पृष्टा अनुयुक्ता इयं बाला मुग्धा शकुन्तला मनोगतम् आधिहेतुं मनस्तापकारणं न वक्ष्यति इति न अपि तु वक्ष्यति, किन्तु अनया शकुन्तलया बहुशः वारंवारं विवृत्य मुखं परावृत्येत्यर्थः सतृष्णं दृष्टोऽपि अवलोकितोऽपि अहम् अत्र सखीप्रश्ने उत्तरश्रवणकातरतां प्रतिवचनश्रवणे कातरता व्याकुलता यदि मद्विषयिणी वार्त्ता न स्यादिति सभयत्वमिति भावः औत्सुक्यमिति केचित्। गतः प्राप्तः अस्मि। वसन्ततिलकं वृत्तम्।

उभे। कधेदु कधेदु पिअसही (क)।

शकु। तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थम्हि संवुत्ता (ख)।

उभे। दिट्ठिआ दे अणुरूए वरे अहिलासो, अधवा साअरं उज्झिअ कहिं महाणदीए पविसिदव्वं (ग)।

राजा। [सहर्षम्]। श्रुतं यच्छ्रोतव्यम्।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।

दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य॥ (३६)

शकु। ता जइ वो अणुमदं तदो तधा पउत्तिदव्वं (३७) जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति, अण्णधा सुमरेध मं (घ)।

(क) कथयतु कथयतु प्रियसखी।

(ख) ततः प्रभृति तद्गतेनाभिलाषेण एतावदवस्थास्मि संवृत्ता।

(ग) दिष्ट्या ते अनुरूपे वरेऽभिलाषः, अथवा सागरमुज्झित्वा कुत्र महानद्या प्रवेष्टव्यम्।

(घ) तद्यदि वोऽनुमतं ततस्तथा प्रवर्त्तितव्यं, यथा तस्य राजर्षेरनुकम्पनीया भवामीति, अन्यथा स्मरत माम्।

(३६) स्मर इति। स्मरः काम एव तापस्य हेतुः कारणं किन्तु स एव स्मर एव तपात्यये ग्रीष्मावसाने अभ्रश्यामः सजलमेघेन आच्छन्न इति यावत् दिवसः जीवलोकस्य प्राणिनिवहस्येव मे मम निर्वापयिता शमयिता तापस्येति शेषः जातः। उपमालङ्कारः। आर्य्याजातिः।

(३७) प्रवर्त्तितव्यं यतितव्यम। स्मरत मां मिये इति भावः।

राजा। अहो विमर्षच्छेदि वचनम्। एतदेव कामफलं, यदन्यफलमन्यत्। एतावदवस्थापि मां सुखयति। (३८)

प्रियं। [जनान्तिकम्]। अणसूए! दूरगदो से मणोरहो अक्खमा (३९) इअं कालहरणस्स (क)।

अन। पिअम्बदे! को णु उआओ भवे? जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेम्ह (ख)।

प्रियं। णिहुदं त्ति चिन्तणीअं सिग्घं त्ति ण दुक्करं (ग)।

अन। कधं विअ? (घ)।

प्रियं। णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ

(क) अनसूये! दूरगतोऽस्या मनोरथः, अक्षमेयं कालहरणस्य।

(ख) प्रियंवदे! को नु उपायो भवेत्? येन अविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयामः।

(ग) निभृतमिति चिन्तनीयं, शीघ्रमिति न दुष्करम्।

(घ) कथमिव?

(३८) विमर्षेति। विमर्षं संशयं छिनत्तीति तथोक्तं सन्देहनिरासकमित्यर्थः। एतदेव अनुरागोत्कर्ष एव इत्यर्थः कामफलं कामस्य प्रयोजनं कार्य्यमिति यावत् कामिन अनुरागस्य परां काष्ठामारोप्यत इत्येवेति भावः। अन्यत् सङ्गमादिकं यवस्य चेष्टायाः फलं कार्य्यम्। यत्ने कृते परिणयादिना सङ्गमो लभ्यते इति भावः। एतदवस्थापि अनुरागाविष्टापि सङ्गमेन विनैव इति भावः। सुखयति आनन्दयति।

(३९) दूरगतः दूरम् अतिवृद्धिं गतः। मनोरथः अभिलाषः कामावेश इति यावत्। अक्षमा असहा।

सुहदाहिलासो इमेसुं दिअएसुं पजाअरकिसो (४०) विअ लक्खीअदि (ङ) ।

राजा । [आत्मानमवलोक्य] । सत्यमित्थम्भूत एवास्मि । तथाहि

अनिशिरतैरन्तस्तापैर्विवर्णमलीमसं
निशि निशि भुजन्यस्तापाङ्गप्रवर्त्तिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कात् मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं पुनः प्रतिसार्य्यते ॥ (४१)

---

(ङ) ननु सोऽपि राजर्षिरस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते ।

---

(४०) प्रजागरकृशः प्रजागरेण निद्राच्छेदेन इत्यर्थः कृशः क्षीणः प्रियतमानुध्यानेन निद्राराहित्यमिति भावः ।

(४१) अनिशेति । अन्तस्तापैः अन्तर्गतैः सन्तापैः हेतुभिः अनिशिरतरैः अत्युष्णैरित्यर्थः निशि निशि प्रतिरात्रं दिवसे तादृशवैधुर्य्यप्रदर्शनेन नायकस्य धीरोदात्तत्वव्याघातः स्यादिति निशि निशि इत्युक्तम् । भुजे हस्ते न्यस्तात् पतितात् अपाङ्गात् नयनान्तात् प्रवर्त्तिभिः निर्गलद्भिः अश्रुभिः विवर्णं वर्णः कान्तिः तद्रहित मलीमसं मलिनञ्च विवर्णमणीकृतमिति पाठे विवर्णं निष्प्रभः मणिः मध्यरत्नं यस्य तत् विवर्णमणि ततश्च अविवर्णमणि विवर्णमणि कृतमिति विवर्णमणीकृतम् अभूततद्भावे च्विप्रत्ययः । कनकवलयं स्वर्णवलयम् अनतिलुलितः अनतिव्यञ्जितः कनकवलयाच्छादनेन इति भावः ज्याया मौर्व्या आघातस्य आकर्षणजनितस्येति भावः अङ्कश्चिह्नं यत्र तथाभूतात् अनतिलुलितज्याघाताङ्कमिति पाठे अनतिलुलितः अनभिव्यञ्जितः आच्छादित इति यावत् ज्याघातस्य अङ्कः चिह्नं येन तथोक्तं कनकवलयमित्यस्य विशेषणम् । मणिबन्धनात् प्रकोष्ठात् मुहुः पुनः पुनः स्रस्तं स्रस्तं गलितं गलितं पुनः प्रतिसार्य्यते यथास्थानं नीयते इत्यर्थः । हरिणीवृत्तं न समरसलागः षड्वेदैर्हयैर्हरिणी मतेति लक्षणात् ।

प्रियं। [विचिन्त्य]। हला! मअणलेहणं दाणिं से करीअदु अहं तं सुमणोगोविदं कदुअ देवदासेवावदेसेण(४२) तस्स रण्णो हत्थं पावइस्सं (क)।

अन। सहि! रोअदि मे सुउमारो (४३) एसो पओओ, किं वा सउन्तला भणादि (ख)।

शकु। सहीणिओओवि विकप्पीअदि (ग)। (४४)

प्रियं। तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं (४५) गीदिअं (घ)।

शकु। चिन्तेमि, किन्तु अवहीरणाभीरुअं (४६) वेवदि मे हिअअं (ङ)।

(क) अयि! मदनलेखनमिदानीमस्याः क्रियताम् अहं तत् सुमनोगोपितं कृत्वा देवतासेवापदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि।

(ख) सखि! रोचते मे सुकुमार एष प्रयोगः, किंवा शकुन्तला भणति।

(ग) सखीनियोगोऽपि विकल्प्यते।

(घ) तेन हि आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम्।

(ङ) चिन्तयामि, किन्तु अवधीरणाभीरुकं वेपते मे हृदयम्।

---

(४२) सुमनोगोपितं सुमनोभिः पुष्पैः गोपितम्। देवतासेवापदेशेन देवार्चनाच्छलेन देवार्चनार्थं कुसुमानि राज्ञः समीपे प्रेष्यन्त इति व्याजेनेति भावः।

(४३) सुकुमारः सुकोमलः अनभिशङ्कनीय इति भावः।

(४४) विकल्प्यते विचार्य्यते सखीवचने शुभाशुभसन्देहो नास्तीति भावः।

(४५) उपन्यासानुरूपं वृत्तान्तानुरूपम्। ललितः सुन्दरः पदावलीनां सुश्लिष्टत्तचयानां बन्धः रचना यस्यां तथाविधाम्।

(४६) अवधीरणाभीरुकम् अवज्ञाभीतम्।

राजा । [विहस्य] ।

अयं स ते तिष्ठति सङ्गमोत्सुको,
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं,
श्रिया दुरापः कथमीप्सितो भवेत् ॥ (४७)

अपिच

अयं स, यस्मात् प्रणयावधीरणा-
मशङ्कनीयां करभोरु ! शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो,
न रत्नमन्विष्यति, मृग्यते हि तत् ॥ (४८)

---

(४७) अयमिति । हे भीरु ! भयशीले ! यतः यस्मात् जनात् अवधीरणाम् अवज्ञां विशङ्कसे सम्भावयसि, सोऽयं जनः आत्मनिर्देशः । ते तव सङ्गमाय उत्सुकः उत्कण्ठितः सन् तिष्ठति । प्रार्थयिता याचकः श्रिय इति शेषः श्रियं सम्पदं लभेत वा न वा लभेत कदाचित् सम्पदभिलाषिणः सम्पद् लाभः स्यात् कदाचिद्वा न स्यादिति भावः । किन्तु ईप्सितः आप्तुमिष्टः प्रार्थयिता श्रिय इति शेषः श्रिया लक्ष्म्या कथं दुरापः दुर्लभः भवेत् ? नैव दुर्लभ इत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । वंशस्थविलं वृत्तं वदन्ति वंशस्थविलं जतौ जराविति लक्षणात् ।

(४८) अयमिति । करभाविव मणिबन्धात् कनिष्ठाङ्गुलिपर्यन्तप्रदेशाविव ऊरू यस्याः तत्सम्बोधने मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः । यस्मात् प्रणयस्य प्रेम्णः अवधीरणाम् अवज्ञानम् अशङ्कनीयां शङ्कितुमनर्हां शङ्कसे तर्कयसि, सोऽयं प्रणयोत्सुकः तव प्रणयाकाङ्क्षी जनः त्वाम् उपस्थितः त्वत्समीपे वर्त्तते इत्यर्थः यतः रत्नं न अन्विष्यति कमपीति शेषः तद्धि तदेव रत्नं मृग्यते अन्विष्यते लोकैरिति शेषः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । वंशस्थविलं वृत्तम् ।

सख्यौ। अइ अत्तगुणावमाणिणि ! (४९) को णाम सन्दावणिव्वाणहेतुअं सारदीअं जोसं आदवत्तेण णिवारेदि ? (क)

शकु। [सस्मितम्] णिओइदाह्मि (ख)। [इति उपविष्टा चिन्तयति]।

राजा। स्थाने खलु विस्मृतनिमेषेण (५०) चक्षुषा प्रियामवलोकयामि। यतः

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन॥ (५१)

शकु। हला ! चिन्तिदा मए गीदिआ, असण्णिहिदाणि उण लेहणसाहणाणि (ग)। (५२)

(क) अयि आत्मगुणावमानिनि ! को नाम सन्तापनिर्वाणहेतुकां शारदीं ज्योत्स्नामातपत्रेण निवारयति ?

(ख) नियोजितास्मि।

(ग) अयि ! चिन्तिता मया गीतिका, असन्निहितानि पुनर्लेखनसाधनानि।

(४९) आत्मगुणेति। आत्मनः स्वस्य गुणान् शीलसौन्दर्य्यादीन् अवमन्यते इति तत्सम्बोधने।

(५०) स्थाने युक्तम्। विस्मृतनिमेषेण निर्निमेषेण इत्यर्थः।

(५१) उन्नमितेति। पदानि सुप्तिङन्तरूपाणि श्लोकयोग्यानीति भावः रचयन्त्या अस्याः शकुन्तलायाः उन्नमिता उत्क्षिप्ता एका भ्रूलता यस्य तादृशम् आननं पुलकाञ्चिते रोमाञ्चालङ्कृतेन कपोलेन मयि अनुरागं कथयति प्रकटयति। आर्य्याजातिः।

(५२) असन्निहितानि अनुपस्थितानि। लेखनसाधनानि मसीलेखन्यादीनि।

प्रियं । णं इमस्सिं सुश्रोदरसुउमारे णलिणीवत्ते पदच्छेदभत्तीए (५३) णहेहिं आलिहीअदु (क) ।

शकु । [यथोक्तं रूपयित्वा] । हला ! सुणध दाव सङ्गदत्था (५४) णव त्ति (ख) ।

उभे । अवहिदह्म (ग) ।

शकु । [वाचयति] ।

तुज्झ ण आणे हिअअं, मम उण मअणो दिवावि रत्तिंपि
णिक्किव ! दावइ बलिअं तुअ हत्थमणोरहाइ अङ्गाइम् ॥(घ)
(५५)

(क) ननु अस्मिन् शुकोदरसुकुमारे नलिनीपत्रे पदच्छेदभक्त्या नखैरालिख्यताम् ।

(ख) अयि ! शृणुतं तावत् सङ्गतार्थां न वेति ।

(ग) अवहिते स्वः ।

(घ) तव न जाने हृदयं, मम पुनर्मदनो दिवापि रात्रिमपि ।
निष्कृप ! तापयति बलीयस्तव हस्तमनोरथाया अङ्गानि ॥

(५३) शुकोदरेति शुकस्य पक्षिविशेषस्य उदरमिव सुकुमारं सुकोमलं तस्मिन् । पदच्छेदभक्त्या पदानां विच्छेदभक्त्या अर्थसौकार्य्यायेति भावः ।

(५४) सङ्गतार्थां युक्तार्थां ।

(५५) तवेति । तव हृदयं न जाने न वेद्मि, पुनः किन्तु हे निष्कृप ! निर्दय ! मदनः कामः तव हस्ते मनोरथः अभिलाषः येषां तादृशानि त्वदायत्तानीति भावः येषामित्यत्र यस्या इति स्त्रीलैकत्वबहुव्रीहौ तव हस्तमनोरथायाः त्वदधीनाया इत्यर्थः मम अङ्गानि दिवा च रात्रौ च अहर्निशमित्यर्थः बलीयः अत्यर्थं यथा तथा तापयति । आर्य्याजातिः ।

राजा। अवसरः खलु अयमात्मानं दर्शयितुम्। [सहसा उपसृत्य]।

तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथाहि कुमुद्वतीं दिवसः ॥ (५६)

सख्यौ। [विलोक्य सहर्षमुत्थाय]। साअदं जधासमीहिदफलस्स अविलम्बिणो मणोहरस्स (क)। (५७)

शकु। [उत्थातुमिच्छति]।

राजा। अलमलमायासेन।

सन्दष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ (५८)

---

(क) स्वागतं यथासमीहितफलस्याविलम्बिनो मनोरथस्य।

---

(५६) तपतीति। हे तनुगात्रि कृशाङ्गि ! मदनः कामः त्वाम् अनिशं सततं तपति, मां पुनः किन्तु दहत्येव। दिवसः शशाङ्कं चन्द्रं यथा ग्लपयति म्लानिं नयति मलिनयतीत्यर्थः कुमुद्वतीं न हि तथा नैव तद्वत् ग्लपयतीत्यर्थः। दिवसे चन्द्रस्य यादृशं मालिन्यं दृश्यते कुमुदिन्यास्तथा नेति भावः। अत्र वाक्ययोर्बिम्बप्रतिबिम्बभावात् दृष्टान्तालङ्कारः तथा च साहित्यदर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति। आर्य्याजातिः।

(५७) यथेति यथासमीहितं यथाभिलषितं फलं यस्य तथाभूतस्य। मनोरथस्य अभिलाषभूतस्य इत्यर्थः।

(५८) सन्दष्टेति। सन्दष्टं सम्यक् ग्रस्तमिति यावत् ऊष्मातिशय्यादिति भावः कुसुमशयनं पुष्पशय्या यैः तथोक्तानि आशु सद्य एव विमर्दितं मृणालवलयं यैः तथोक्तानि अतएव गुरुर्महान् परितापः अन्तस्तापः येषां तथाभूतानि ते तव गात्राणि अङ्गानि उपचारम् अभ्युत्थानादिकमागन्तुकसत्कारं न अर्हन्ति न कर्त्तुं शक्नुवन्तीत्यर्थः। आर्य्याजातिः।

शकु । [ससाध्वसमात्मगतम्] । हिअअ ! तथा उत्तम्मिअ दाणिं ण किम्पि पडिवज्जसि (क) । (५९)

अन । इदो सिलादलेक्कदेसं अणुगेह्णदु महाभाओ (ख) ।

शकु । [किञ्चिदपसरति] ।

राजा । [उपविश्य] । कच्चित् सखीं वो नातिबाधते (६०) शरीरतापः ?

प्रियं । [सस्मितम्] । दाणिं लद्धोषधो उवसमं गमिस्सदि (ग) ।

शकु । [सलज्जा तिष्ठति] ।

प्रियं । महाभाअ ! दोणम्पि वो अण्णोण्णाणुराओ पच्चक्खो, सहीसिणेहो उण मं पुणरुत्तवादिणीं (६१) करेदि (घ) ।

राजा । भद्रे ! नैतत् परिहार्य्यं, विवक्षितं (६२) हि अनुक्तमनुतापं जनयति ।

---

(क) हृदय ! तथा उत्तम्य इदानीं न किमपि प्रतिपद्यसे ।

(ख) इतः शिलातलैकदेशमनुगृह्णातु महाभागः ।

(ग) इदानीं लब्धौषध उपशमं गमिष्यति ।

(घ) महाभाग ! द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः, सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति ।

---

(५९) उत्तम्य उत्तापं भूत्वा उत्सुकीभूयेत्यर्थः । न किमपि प्रतिपद्यसे इति कर्त्तव्यविमूढं भवसीति भावः ।

(६०) नातिबाधते न अतिपीडयति ?

(६१) पुनरुक्तवादिनीं समधिकवादिनीमित्यर्थः ।

(६२) परिहार्य्यं त्यक्तव्यम् अतिक्रमणीयमित्यर्थः । विवक्षितं वक्तुमिष्टम् ।

प्रियं। तेण हि सुणादु अज्जो (क)।

राजा। अवहितोऽस्मि।

प्रियं। अस्समवासिणो जणस्स रक्खा अत्तिहरेण होदव्वं त्ति णं एसो धम्मो (ख)।

राजा। अस्मात्परं किन्तत्।

प्रियं। तेण हि इअं णो पिअसही तुमं ज्जेव उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा, ता अरिहसि अब्भुववत्तीए (६३) जीविदं से अवलम्बइदुं (ग)।

राजा। भद्रे! साधारणोऽयं प्रणयः (६४) सर्वथानुगृहीतोऽस्मि।

शकु। [अनसूयामवलोक्य]। हला! अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण (घ)। (६५)

राजा। इदमनन्यपरायणमन्यथा
हृदयसन्निहिते! हृदयं मम।

(क) तेन हि शृणोतु आर्यः।

(ख) आश्रमवासिनो जनस्य राज्ञा आर्त्तिहरेण भवितव्यमिति ननु एष धर्मः।

(ग) तेन हि इयं नः प्रियसखी त्वामेवोद्दिश्य भगवता मदनेन इदमवस्थान्तरं प्रापिता, तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम्।

(घ) अयि! अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन।

(६३) अभ्युपपत्त्या अनुग्रहेण।

(६४) साधारणः सामान्यः अयं प्रणयः प्रार्थना। यथाहमेताम् अनुगृहीष्यामि तथा इयमपि मामनुगृहीष्यतीति द्वयोरावयोः समोऽभिलाष इति भावः।

(६५) उपरुद्धेन अनुरुद्धेन।

यदि समर्थयसे मदिरेक्षणे !
मदनबाणहतोऽपि हत: पुन: ॥ (६६)

अन। बहुवल्लहा क्खु राआणो सुणीअन्ति, ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि तधा करिस्सदि (क)।

राजा। भद्रे ! किं बहुना।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररसना चोर्व्वी सखी च युवयोरियम्॥ (६७)

उभे। णिव्वुदह्म (ख)। (६८)

(क) बहुवल्लभा: खलु राजान: श्रूयन्ते, तद् यथा इयं न: प्रियसखी बन्धुजनशोचनीया न भवति तथा करिष्यति।

(ख) निर्वृते स्व:।

(६६) इदमिति। हे हृदयसन्निहिते दृष्टाङ्गिनि मदिरेक्षणे मत्तखञ्जननेत्रे ! इदं न अन्यत् त्वत्त इति भाव: परम् अयनम् आश्रयो यस्य तथाभूतं त्वदेकप्रवणमित्यर्थ: मम हृदयं यदि अन्यथा विपरीतं त्वदन्यपरायणमिति भाव: समर्थयसे सम्भावयसि तदा मदनस्य बाणेन हतोऽपि विद्धोऽपि अहमिति शेष: पुन: हत: विद्ध: क्षते क्षारमिव विद्धवेधनमिति भाव:। द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भराविति लक्षणात्।

(६७) परिग्रहेति। परिग्रहाणां स्त्रीणां बहुत्वेऽपि आधिक्येऽपि समुद्ररसना सागरपरिवृतेति भाव: उर्व्वी पृथिवी युवयोरियं सखी च एते द्वे मे मम कुलस्य वंशस्य प्रतिष्ठे गौरवभूते। बहुभार्य्यत्वेऽपि पृथिवीपतित्वेन यथाहं गौरववान् तथा युवयो: सख्या: पतित्वेनात्मानं गौरविणं मन्ये इति निष्कर्ष:। पथ्यावक्त्रम्।

(६८) निर्वृते निश्चिन्ततया सुखिन्यौ।

शकु। [हर्षं सूचयति]।

प्रियं। [जनान्तिकम्] (६९)। अणसूए! पेक्ख पेक्ख मेहवादाहदं विअ गिह्मे मोरीं क्खणे क्खणे पच्चाअदजीविदं पिअसहीं (क)। (७०)

शकु। हला! मरिसावेध लोअपालं, जं अह्मेहिं विस्सम्भपलाविणीहिं उवआरादिक्कमेण (७१) भणिदं (ख)

सखी। [सस्मितम्]। जेण तं मन्तिदं, सो ज्जेव मरिसावेदु, अस्स को अण्णो (ग)। (७२)

(क) अनसूये! पश्य पश्य मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम्।

(ख) अयि! मर्षयतं लोकपालं यदस्माभिर्विश्रम्भप्रलापिनीभिरुपचारातिक्रमेण भणितम्।

(ग) येन तन्मन्त्रितं स एव मर्षयतु, अन्यस्य कोऽन्यय:।

(६९) जनान्तिकं त्रिपताककरेणान्यानपवार्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकमित्युक्तरीत्या अभिनयविशेष:।

(७०) मेघेति मेघवातेन आहतामिव स्पृष्टामिव। प्रत्यागतजीवितां प्रत्यागतजीवनां ग्रीष्मार्त्ता मयूरी यथा अभिनवमेघस्य वातस्पर्शेन शमिततापा निर्वृतिमेति तथा प्रियसखी आवयोर्मदनार्त्ता साम्प्रतं प्रियजनसमागमेन पुनर्जीवितेव निर्वृतिमाप्नेति निष्कर्ष:।

(७१) मर्षयतं क्षान्तं कुरुतम्। लोकपालं भूलोकपतिम्। उपचारातिक्रमेण यथोचितसम्मानमनतिक्रम्येत्यर्थ:। विश्रम्भपलापिनीभि: नि:शङ्कं यथा तथा निष्कृपेत्यादि वादिनीभि:।

(७२) मर्षयतु क्षमयतु। मन्त्रितं प्रलपितम्। अन्यय: क्षति:।

शकु । अरिहदि क्खु महाराओ इमं विसोढुं, परोक्खं वा ण किं को मन्तेदि ? (क)।

राजा । [सस्मितम्] ।

अपराधमिमं ततः सहिष्ये,
यदि रम्भोरु ! तवाङ्गसङ्गसृष्टे ।
कुसुमास्तरणे क्लमापहेऽस्य
स्वजनत्वादनुमन्यसेऽवकाशम् ॥ (७१)

प्रियं । [सोपहासम्] । णं एत्तिकेण उण तुट्ठो भविस्सदि ? (ख) ।

शकु । [सरोषमिव] । विरम विरम दुव्विणीदे ! एदावदवत्थं गदाए मए कीलसि ? (ग) ।

अन । [वहिः सदृष्टिक्षेपम्] । पिअंवदे ! एस तवस्सिमिअपोदओ इदोतदो दिण्णदिट्ठी णूणं मादरं पब्भट्टं अण्णेसदि, ता संजोजेमि णं (घ) ।

---

(क) अर्हति खलु महाराज इदं विसोढुम्, परोक्षं वा न किं को मन्त्रयति ।

(ख) नन्वेतावन्मात्रेण पुनस्तुष्टो भविष्यति ?

(ग) विरम विरम दुर्विनीते ! एतावदवस्थां गतया मया क्रीडसि ? ।

(घ) प्रियंवदे ! एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टामन्विष्यति, तत् संयोजयामि एनम् ।

---

(७१) अपराधमिति । हे रम्भोरु ! यदि तव अङ्गानां सङ्गेन सृष्टे विमृष्टे विमर्दिते वा अतएव क्लमापहे क्लमं सन्तापम् अपहन्तीति तथोक्ते अत्र कुसुमास्तरणे पुष्पशय्यायां स्वजनत्वात् आत्मीयत्वात् अवकाशं स्थितिम् अनुमन्यसे ततः तदा इमम् उपचारातिक्रमजनितमित्यर्थः अपराधं सहिष्ये क्षमिष्ये । सुन्दरीवृत्तम् अयुजोः यदि सौ जगौ युजोः सभरालौ यदि सुन्दरी तदेति लक्षणात् ।

प्रियं। हला ! चवलो क्खु एसो, ण एणं संजोजइदुं एआइणी पारेसि, ता अहंपि सहाअत्तणं करिस्सं (क)। [इत्युभे प्रस्थिते]।

शकु। हला ! इदो अस्सदो ण वो गन्तुं अणुमस्से, जदो असहाइणीह्मि (ख)।

उभे। [सस्मितम्] तुमं दाव असहाइणी, जाए पहु-वीणाहो समीवे वट्टदि (ग)। [इति निष्क्रान्ते ]।

शकु। कधं गदाओ ज्जेव पिअसहीओ (घ)।

राजा। सुन्दरि ! अलमावेगेन, नन्वयमाराधयिता जनस्ते सखीभूमौ (७४) वर्त्तते। तदुच्यताम्

किं शीकरैः क्लमविमर्द्दिभिरार्द्रवातं
सञ्चालयामि नलिनीदलतालवृन्तम् ?।
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु ! यथासुखन्ते ?॥ (७५)

(क) अयि ! चपलः खल्वेषः, नैनं संयोजयितुमेकाकिनी पारयसि, तदह-मपि सहायत्वं करिष्यामि।

(ख) अयि ! इतोऽन्यतो न वो गन्तुमनुमन्ये, यतोऽसहायिनी अस्मि।

(ग) त्वं तावदसहायिनी, यस्याः पृथिवीनाथः समीपे वर्त्तते।

(घ) कथं गते एवं प्रियसख्यौ।

(७४) आराधयिता सेवकः। सखीभूमौ सखीस्थाने।

(७५) किमिति। हे करभोरु ! क्लमविमर्द्दिभिः सन्तापहारिभिः शीकरैः अम्बुकणैः आर्द्रः सिक्तः वातः यस्य तथोक्तं नलिनीदलतालवृन्तं पद्मपत्रव्यजनं किं सञ्चालयामि ? उत अथवा पद्मवत् ताम्रौ रक्तौ ते तव चरणौ अङ्के क्रोडे निधाय

शकु । ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं (क)

इति अवस्थासदृशमुत्थाय प्रस्थातुमिच्छति ।

राजा । [अवष्टभ्य] सुन्दरि ! अपरिनिर्वाणो (७६) दिवसः, इयञ्च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा ।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः ? ॥ (७७)

इति बलान्निवारयति ।

शकु । मुञ्च मुञ्च मं, ण क्खु अत्तणो पहवामि, अधवा सहीमेत्तसरणा (७८) किं दाणिं एत्थ करिस्सं (ख) ।

---

(क) न माननीयेषु जनेषु आत्मानमपराधयिष्यामि ।

(ख) मुञ्च मुञ्च मां, न खल्वात्मनः प्रभवामि, अथवा सखीमात्रशरणा किम् इदानीमत्र करिष्यामि ।

नीत्वा यथासुखं संवाहयामि सेवे किं शीतलैः क्लमविमर्दिभिरार्द्रवातान् सञ्चालयामि नलिनीदलतालवृन्तैरिति पाठे शीतलैः अतएव क्लमविमर्दिभिः नलिनीदलतालवृन्तैः आर्द्रवातान् सञ्चालयामीति योजना ।

(७६) अवष्टभ्य गृहीत्वा । अपरिनिर्वाणः नास्ति परिनिर्वाणम् अवसानमित्यर्थः यस्य तथाभूतः सौरतापेन सहित इत्यर्थः ।

(७७) उत्सृज्येति । नलिनीदलेन पद्मपत्रेण कल्पितं रचितं स्तनयोः आवरणम् आच्छादनं यया तथोक्ता त्वं कुसुमशयनम् उत्सृज्य विहाय परिबाधया सन्तापेन कोमलैः मृदुभिः मर्दितैरिति भावः अङ्गैः आतपे कथं गमिष्यसि ? नैव गन्तुं शक्यसीत्यर्थः । आर्य्याजातिः ।

(७८) आत्मनः स्वस्य प्रभवामि प्रभुर्भवामीत्यर्थः गुरुजनाधीनत्वात् यदि प्रभुः स्यां तदा ते वचनं शृणुयामिति भावः । सखीमात्रं सख्यावेव इत्यर्थः शरणम् आश्रयो यस्याः तादृशी ।

राजा । धिग् व्रीड़ितोऽस्मि । (७९)

शकु । णक्खु, अहं महाराअं भणामि, देव्वं उवालम्भामि (क) । (८०)

राजा । अनुकूलकारि (८१) दैवं कथमुपालभ्यते ? ।

शकु । कधं दाणिं ण उवालहिस्सं ? जं मं अत्तणो अणीसं (८२) कदुअ परगुणेहिं लोहावेदि (ख) ।

राजा । [स्वगतम्] ।

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः,
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वा-
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्य्यः ॥ (८३)

(क) न खल्वहं महाराजं भणामि दैवमुपालभे ।

(ख) कथमिदानीं नोपालभे ? यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति ।

---

(७९) व्रीड़ितः लज्जितः अप्रतिभ इत्यर्थः महाक्यानभिनन्दनादिति भावः तस्मात् धिक् आत्मानमिति शेषः आत्मानं निन्दामीत्यर्थः । अयुक्तकारित्वादिति भावः । धिङ्निर्भर्त्सननिन्दयोरित्यमरः ।

(८०) दैवम् उपालभे तिरस्करोमि दैवं कथं मां पराधीनामकरोदिति तिरस्काराशयः ।

(८१) अनुकूलकारि हितकारि ।

(८२) अनीशम् अप्रभुम् ।

(८३) अपीति । कुमार्य्यः महति औत्सुक्ये दयितप्राप्त्यभिलाषात् उत्कण्ठायामित्यर्थः अपि दयितस्य प्रियस्य प्रार्थनासु प्रतीपाः प्रतिकूलाः तदपूरणकारिण्य इति यावत् व्यतिकरसुखं समागमसुखं काङ्क्षन्त्योऽपि स्वाङ्गस्य दाने अर्पणे कातराः असक्ता इति यावत् अतएव क्षिप्तः अतिक्रान्तः कालः समयः याभिः तथोक्ताः सत्यः

शकु । [गच्छत्येव] ।

राजा । न कथमात्मनः प्रियं करिष्ये ? [उपसृत्य पटान्तमवलम्बते] ।

शकु । पोरव ! रक्ख रक्ख विणयं, (८४) इदोतदो इसिओ सञ्चरन्ति (क) ।

राजा । सुन्दरि ! अलं गुरुजनाशङ्कया, न ते विदितधर्मा तत्रभवान् कण्वः खेदम् (८५) उपयास्यति । यतः

गान्धर्व्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥ (८६)

[दिशोऽवलोक्य] । कथं प्रकाशं निर्गतोऽस्मि ? [शकुन्तलां हित्वा पुनस्तैरेव पदैर्निवर्त्तते] ।

शकु । [पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम्] । पोरव !

---

(क) पौरव ! रक्ष रक्ष विनयं, इतस्तत ऋषयः सञ्चरन्ति ।

---

अभ्यान्तरत्वात् प्राणावरत्वात् मदनेनैव न खलु नैव आबाध्यन्ते प्रपीड्यन्ते, मनस्विजनमपि मदनमपि आबाधन्ते पीड़यन्ति तदभिमतानुष्ठानादिति भावः । मन्दाक्रान्तावृत्तम् ।

(८४) विनयं शिष्टाचारं सौजन्यमिति यावत् ।

(८५) विदितधर्मा विदितः ज्ञातः धर्म्मः गान्धर्वविवाहरूपः येन तथाभूतः । खेदं दुःखं क्रोधं वा ।

(८६) गान्धर्वेण इति । बह्व्यः अनेकाः मुनिकन्यकाः गान्धर्वेण विवाहेन मिथः समयेन परिणयेन तथा चोक्तं मनुना । इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयः मैथुन्यः कामसम्भव इति परिणीताः अथ परिणयानन्तरं ताः पितृभिः गुरुजनैः अनुमोदिताः अभिनन्दिताश्च श्रूयन्ते । पथ्यावक्त्रं वृत्तम् ।

अणिच्छापूरओवि सम्भासणमेत्तपरिचिदो (८७) अअं जणो ण विसुमरिदव्वो (क)।

राजा। सुन्दरि!

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे।

दिवावसाने छायेव पुरोमूलं वनस्पतेः॥ (८८)

शकु। [स्तोकमन्तरं (८९) गत्वा आत्मगतम्]। हद्धी हद्धी! इमं सुणिअ ण मे चलणा पुरोमुहा पसरन्ति (९०) भोदु, इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा (९१) भविअ पेक्खिस्सं दाव से भावाणुबन्धं (ख) (९२)। [तथा कृत्वा स्थिता]।

---

(क) पौरव! अनिच्छापूरकोऽपि सम्भाषणमात्रपरिचितोऽयं जनो न विस्मर्तव्यः।

(ख) हा धिक् हा धिक्! इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः, भवतु, एभिः पर्य्यन्तकुरुवकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम्।

---

(८७) अनिच्छापूरकः अपूरितमनोरथः। सम्भाषणेति सम्भाषणमात्रम् आलापमात्रं तेन परिचितः प्राप्तपरिचयः।

(८८) त्वमिति। दिवावसाने छाया वनस्पतेः वृक्षस्य पुरः अग्रतः दूरत इत्यर्थः गच्छन्ती छाया मूलमिव वनस्पतेरिति काकाक्षिगोलकन्यायेन उभयत्रान्वयः। त्वं दूरं गच्छन्ती अपि मे मम हृदयं न जहासि न त्यजसि। उपमालङ्कारः। पथ्यावक्त्रं वृत्तम्।

(८९) स्तोकमल्पम् अन्तरं दूरम्।

(९०) पुरोमुखौ अग्रवर्त्तिनौ इत्यर्थः प्रसरतः चलतः।

(९१) पर्य्यन्तकुरुवकैः प्रान्तवर्त्तिकुरुवकाख्यतरुभिः। अपवारितशरीरा गोपितदेहा।

(९२) भावानुबन्धं प्रणयस्य अनुबन्धम् अनुवृत्तिम्।

राजा। कथमेवं प्रिये! अनुरागैकरसं मामुत्सृज्य निरपेक्षैव (९३) गतासि?

अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम्।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम्॥ (९४)

शकु। एदं सुणिअ ण मे अत्थि विहवो (९५) गच्छिदुं (क)

राजा। सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि? [अग्रतोऽवलोक्य]। हन्त! व्याहतं मे गमनम् (९६)।

(क) इदं श्रुत्वा न मेऽस्ति विभवो गन्तुम्।

(९३) अनुरागे प्रेम्णि एकः अविचलित इति भावः रसः प्रवृत्तिरित्यर्थः यस्य तादृशम्। निरपेक्षैव निरनुरोधैव।

(९४) अनिर्दयेति। अनिर्दयम् अगाढ़ं यथा तथा उपभोगः सम्भोगः उचित इति भावः यस्य तथाभूतस्य अनिर्दयोपभोग्यस्य इति वा पाठः। मृदुनः कोमलस्य ते तव रूपस्य आकृतेः चेतः चित्तं शिरीषस्य तदाख्यकुसुमस्य बन्धनमिव वृन्तमिव कथं कठिनं खलु निर्दयमेव इत्यर्थः। काठिन्यहेतुं विना कोमलवस्तुनिष्ठचित्तवृत्तेः काठिन्योत्पत्तेर्विभावना चित्तस्य मार्दवहेतौ सत्यपि तदभावाद्विशेषोक्तिश्च सन्दिग्धतया सङ्कीर्य्यते। उपमालङ्कारस्य तदनयोरस्याश्च संसृष्टिः। तथाच दर्पणे। विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति। सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति च।

(९५) विभवः सामर्थ्यम्।

(९६) व्याहतं विघ्नितमित्यर्थः। मे मम गमनम्। गन्तुं न शक्नोमीति भावः।

मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगड़मिव मे मृणालवलयं स्थितं पुरतः ॥ (९७)
[सबहुमानमादत्ते] ।

शकु । [हस्तं विलोक्य] । अम्मो ! दौव्वल्लसिढ़िलदाए परिब्भट्टं एदं मिणालवलअं ण मए परिस्सादं (क) ।

राजा । [मृणालवलयमुरसि निक्षिप्य] । अहो स्पर्शः ।

अनेन लीलाभरणेन ते प्रिये !
विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभाक्
अचेतनेनापि सता न तु त्वया ॥ (९८)

शकु । अदोवरं ण समत्थम्हि विलम्बिदुं, भोदु एदेण ज्जेव अवदेसेण अत्ताणं दंसइस्सं (ख) [इति उपसर्पति] ।

---

(क) अहो ! दौर्बल्यशिथिलतया परिभ्रष्टमिदं मृणालवलयं न मया परिज्ञातम् ।

(ख) अतःपरं न समर्थास्मि विलम्बितुं, भवतु एतेन एव अपदेशेन आत्मानं दर्शयिष्यामि ।

---

(९७) मणिबन्धादिति । तस्याः शकुन्तलायाः मणिबन्धात् बलयस्थानादित्यर्थः गलितं च्युतं सङ्क्रान्तः संसक्तः उशीरस्य वीरणमूलानुलेपनस्य परिमलः विमर्दगन्धः यस्मिन् तादृशं विमर्दोत्थे परिमल इत्यमरः । इदं मृणालवलयं मृणालनिर्म्मितं करभूषणविशेषः मे मम हृदयस्य निगड़मिव बन्धनशृङ्खल इव पुरतः अग्रतः स्थितम् । उत्प्रेक्षालङ्कारः । आर्य्याजातिः ।

(९८) अनेनेति । हे प्रिये ! तव कान्तं मनोहरं भुजं करं विहाय अत्र तिष्ठता अनेन लीलाभरणेन विलासभूषणेन अचेतनेनापि सता एष दुःखभाक्

राजा। [दृष्ट्वा सहर्षम्]। अये! जीवितेश्वरी मे प्राप्ता। परिदेवनानन्तरं प्रसादेन(९९)उपकर्त्तव्योऽस्मि खलु दैवस्य।

विपासाक्षामकण्ठेन याचितश्चाम्बु पक्षिणा।

नवमेघोज्झिता चास्य धारा निपतिता मुखे॥ (१००)

शकु। [राज्ञः सम्मुखे स्थित्वा]। अज्ज! अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स किदे पडिणिवुत्तह्मि, कधिदं मे हिअएण तुए गहिदं त्ति, ता णिक्खिव (१०१) एदं, मा मं अत्ताणञ्च मुणिअणेसुं पआसइस्सदि क

---

(क) आर्य्य! अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य क्वते प्रतिनिवृत्तास्मि, कथितं मे हृदयेन त्वया गृहीतमिति तन्निक्षिपेदं, मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यति।

---

सन्तप्त इत्यर्थः जनः अहमिति भावः समाश्वासितः सान्त्वितः निर्वापित इत्यर्थः। न तु त्वया समाश्वासित इत्यर्थः। वंशस्थविलं वृत्तम्।

(९९) परिदेवनानन्तरं विलापानन्तरं विलापः परिदेवनमित्यमरः। प्रसादेन अनुग्रहेण।

(१००) पिपासेति। पिपासया तृष्णया क्षामः क्षीणः शुष्क इति यावत् कण्ठो यस्य तथोक्तेन पक्षिणा चातकेन अम्बु जलं याचितञ्च प्रार्थितञ्च, नवमेघेन उज्झिता मुक्ता धारा वारिबिन्दुरित्यर्थः अस्य चातकस्य मुखे निपतिता च। अत्र च इयेन प्रार्थनपतनक्रिययोर्यौगपद्यकीर्त्तनात् समुच्चयालङ्कारः तथाच दर्पणे। समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्। गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये इति। पथ्यावक्त्रं वृत्तम्।

(१०१) निक्षिप अर्पय।

राजा। एतेनाभिसन्धिना (१०२) प्रत्यर्पयामि।

शकु। केण उण? (क)।

राजा। यदि इदमहमेव यथास्थानं निवेशयामि।

शकु। आ! का गदी, भोदु एदं दाव (ख)। [इति उपसर्पति]।

राजा। इतः शिलापट्टैकदेशं संश्रयावः। [इति उभौ परिक्रम्योपविष्टौ]।

राजा। [शकुन्तलाया हस्तमादाय]। अहो स्पर्शः।

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा।

प्ररोहः सम्भृतो भूयः किं स्वित् कामतरोरयम्?॥(१०३)

शकु। [स्पर्शं रूपयित्वा]। तुवरदु तुवरदु अज्जउत्तो(ग)

राजा। [सहर्षमात्मगतम्]। इदानीमस्मि विश्वसितः, भर्त्तुराभाषणपदमेतत् (१०४) [प्रकाशम्]। सुन्दरि! नाति-

(क) केन पुनः?

(ख) आः! का गतिर्भवतु एवं तावत्।

(ग) त्वरतां त्वरतामार्य्यपुत्रः।

(१०२) अभिसन्धिना नियमेन।

(१०३) हरेति। हरस्य कोपाग्निना क्रोधानलेन दग्धस्य भस्मसात् कृतस्य कामतरोः अमृतवर्षिणा दैवेन प्ररोहः अङ्कुरः भूयः पुनः सम्भृतः उत्पादितः किं स्वित् किं प्रश्ने स्वित् वितर्के शकुन्तलायाः कररूपेण कामाङ्कुरः संजनितः किम्। पथ्यावक्त्रं वृत्तम्।

(१०४) आभाषणपदं सम्भाषणपदम्।

श्लिष्टः सन्धिः (१०५) अस्य मृणालवलयस्य, यदि तेऽभिमतं तदन्यथा घटयिष्यामि। (१०६)

शकु। [स्मितं कृत्वा]। जधा दे रोअदि (क)

राजा। [सव्याजं विलम्ब्य प्रतिमोच्य] (१०७)। सुन्दरि! दृश्यताम्।

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः।
मृणालरूपेण नवो निशाकरः।
करं समेत्योभयकोटिमाश्रितः॥ (१०८)

शकु। ण दाव णं पेक्खामि, पवणकम्पिदकण्णुप्पलरेणुणा कलुसीकिदा (१०९) मे दिट्ठी (ख)।

(क) यथा ते रोचते।

(ख) न तावदेनं प्रेक्षे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः।

(१०५) नातिश्लिष्टः नातिलग्नः। सन्धिः संयोगः।

(१०६) घटयिष्यामि योजयिष्यामि।

(१०७) प्रतिमोच्य परिधाप्य।

(१०८) अयमिति। अयं स प्रसिद्धो नवो निशाकरः विशेषशोभार्थमिव उज्झितं त्यक्तम् अम्बरम् आकाशं येन तथाभूतः सन् मृणालरूपेण ते तव श्यामलतावत् मनोहरं श्यामलतया श्यामवर्णत्वेन मनोहरं करं समेत्य प्राप्य उभयकोटिम् उभयाग्रभागम् आश्रितः। उत्प्रेक्षालङ्कारः। वंशस्थविलं वृत्तम्।

(१०९) पवनेति पवनेन कम्पितं यत् कर्णोत्पलं तस्य रेणुना परागेण। कलुषीकृता मलिनीकृता आछन्नेति यावत्।

राजा। [सस्मितम्]। यद्यनुमन्यसे, तदहमेनां (११०) वदनमारुतेन विशदां (१११) करवाणि।

शकु। तदो अणुकम्पिदा भवेअं, किन्तु उण अहं ण दे वीससेमि (क)।

राजा। मामैवं, नवो हि परिजनः सेव्यानाम् (११२) आदेशात् परं न वर्त्तते।

शकु। अअं ज्जेव अच्चादरो अविस्सासजणओ (ख)।

राजा। [स्वगतम्]। न अहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये [मुखमुन्नमयितुं प्रवृत्तः]।

शकु। [प्रतिषेधं रूपयन्ती विरमति]।

राजा। अयि मदिरेक्षणे! अलमस्मदविनयाशङ्कया।

शकु। [किञ्चित् दृष्ट्वा व्रीडावनतमुखी तिष्ठति]।

राजा। [अङ्गुलिभ्यां मुखमुन्नमय्य आत्मगतम्]।

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः॥ (११३)

---

(क) तदानुकम्पिता भवेयम्, किन्तु पुनरहं न ते विश्वसिमि।

(ख) अयमेव अत्यादरोऽविश्वासजनकः।

(११०) एनां दृष्टिम्।

(१११) विशदां निर्मलां परिष्कृतामिति यावत्।

(११२) परिजनः परिवारः भृत्य इति यावत् सेव्यानां प्रभूणामिति यावत्।

(११३) चारुणेति। अयम् अपरिक्षतः अदृष्टपूर्व इति भावः अतएव कोमलः मृदुलः परिक्षतं हि स्थानं कठिनं भवतीति भावः। प्रियायाः अधरः दशनच्छदः चारुणा मनोज्ञेन स्फुरितेन स्पन्दितेन पिपासतः तृषाकुलस्य मम अनुज्ञां पाने इति शेषः ददातीव। उत्प्रेक्षालङ्कारः पथ्यावक्त्रं वृत्तम्।

शकु । परिस्साणमन्थरो (११४) विश्र अज्जउत्तो (क) ।

राजा । कर्णोत्पलसन्निकर्षादीक्षणमूढ़ो (११५) ऽस्मि ।

[मुखमारुतेन चक्षुः सेवते] ।

शकु । भोदु पइदित्थदंसस्ह्मि संवुत्ता । लज्जेमि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स (ख) ।

राजा । सुन्दरि ! किम् अन्यत् ?

इदमप्युपकृतिपक्षे सुरभि मुखन्ते यदाघ्रातम् ।

ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण ॥ (११६)

शकु । [सस्मितम्] । असन्तोसे उण किं करेदि ? (ग)

राजा । इदम् इति व्यवसितः । (११७)

(क) परिज्ञानमन्थर इव आर्य्यपुत्रः ।

(ख) भवतु प्रकृतिस्थदर्शनास्मि संवृत्ता । लज्जे पुनरनुपकारिणी प्रियकारिण आर्य्यपुत्रस्य ।

(ग) असन्तोषे पुनः किं करोति ?

(११४) परिज्ञानेति परिज्ञाने चक्षुषि कर्णोत्पलरजसः सम्यक् ज्ञानं तत्र मन्थरः विमूढ़ः ।

(११५) कर्णोत्पलस्य सन्निकर्षात् सान्निध्यात् ईक्षणे नयने मूढ़ः किमेतत् कर्णोत्पलम् उत नयनमिति भ्रान्त इति यावत् ।

(११६) इदमिति । ते तव सुरभि सौरभयुक्तं मुखं यत् आघ्रातम् इदमपि एतत् आघ्राणमपि उपकृतिपक्षे उपकारकल्पे उपकारत्वेन इत्यर्थः परिगणितमिति शेषः ननु तथाहि मधुकरः कमलस्य गन्धमात्रेण सन्तुष्यति मध्वलाभेऽपि इति भावः । प्रतिवस्तूपमालङ्कारः तथा च दर्पणः । प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । आर्य्याजातिः ।

(११७) व्यवसितः प्रवृत्त इत्यर्थः उद्यत इति यावत् चुम्बितुमिति शेषः ।

शकु । [वक्त्रं ढौकते] ।

[नेपथ्ये] । चक्कवाअबहु ! आमन्तेहि सहअरं, णं उव-त्थिदा रअणी (क) ।

शकु । [कर्णं दत्त्वा ससम्भ्रमम्] । अज्जउत्त ! एसा क्खु तादकस्सस्स धम्मकणीअसी मम वुत्तन्तोवलम्भणणिमित्तं अज्जा गोदमी आअच्छदि, ता विड़वान्तरिदो होहि (ख) ।

राजा । तथा, [इति एकान्ते स्थितः] ।

ततः प्रविशति पात्रहस्ता गौतमी ।

गौत । जादे ! अच्चाहिदं (११८) सुणिअ आअदा, एदं सान्तिउदअं । [दृष्ट्वा समुत्थाप्य च] । इध देवदास-हाइणी (११९) चिट्ठसि ? (ग)

शकु । दाणिं ज्जेव अणसूआपिअंवदाओ मालिणीं ओदीणाओ (घ) ।

गौत । [शान्त्युदकेन शकुन्तलाम् अभ्युक्ष्य] । जादे !

(क) चक्रवाकवधु ! आमन्त्रय सहचरं ननु उपस्थिता रजनी ।

(ख) आर्य्यपुत्र ! एषा खलु तातकण्वस्य धर्मकनीयसी मम वृत्तान्तोपलम्भन-निमित्तमार्य्या गौतमी आगच्छति, तद्विटपान्तरितो भव ।

(ग) जाते ! अत्याहितं श्रुत्वा आगता, एतच्छान्त्युदकम् । इह देवता-सहायिनी तिष्ठसि ? ।

(घ) इदानीमेव अनसूयाप्रियंवदे मालिनीमवतीर्णे ।

(११८) अत्याहितम् अत्यन्तमसुखमित्यर्थः ।

(११९) देवतासहायिनी दैवमात्रसहाया एकाकिनीति भावः ।

णिराबाधा(१२०) मे चिरं जीव, अवि दे लहुसन्दाबाइं(१२१) अङ्गाइं (क) [इति स्पृशति] ।

शकु । अत्थो अत्थि विसेसो (ख) । (१२२)

गौत । परिणदो दिअसो, ता एहि उडअं ज्जेव गच्छह्म (ग) ।

शकु । [कथञ्चिदुत्थाय स्वगतम्] । हिअअ ! पढमं सुहोवणदे मणोरहे कालहरणं करेसि, सम्पदं अणुभव दाव दुक्खं । [पदान्तरे प्रतिनिवृत्त्य । प्रकाशम्] । लदाघर ! सन्दावहर ! आमन्तेमि तुमं पुणोवि परिभोअत्थं (घ) ।

इति निष्क्रान्ते ।

राजा । [पूर्वस्थानमुपेत्य सनिश्वासम्] अहो ! विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि ।

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।

(क) जाते ! निराबाधा मे चिरं जीव । अपि ते लघुसन्तापानि अङ्गानि ?

(ख) अस्ति अस्ति विशेषः ।

(ग) परिणतो दिवसस्तदेहि उटजमेव गच्छावः ।

(घ) हृदय ! प्रथम सुखोपनते मनोरथे कालहरणं करोषि, साम्प्रतमनुभव तावद्दुःखम् । लतागृह ! सन्तापहर ! आमन्त्रयामि त्वां पुनरपि परिभोगार्थम् ।

---

(१२०) निराबाधा नीरोगेत्यर्थः ।

(१२१) लघुसन्तापानि शान्ततापानीत्यर्थः ।

(१२२) विशेषः किञ्चिदुपशमः ।

मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितन्तु ॥ (१२३)

क्व नु खलु सम्प्रति गच्छामि? अथवा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्त्तं तिष्ठामि। [सर्वतोऽवलोक्य]।

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं,
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्जमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि ॥(१२४)

[विचिन्त्य]। अहो! धिक् असम्यक् (१२५) चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीम्।

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुनः
न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः।

---

(१२३) मुहुरिति। पक्ष्माणि सन्त्यनयोरिति पक्ष्मले घनलोमशालिनी इत्यर्थः अक्षिणी नयने यस्याः तथोक्तायाः मुहुः पुनःपुनः अङ्गुलिभिः संवृतौ आच्छादितौ अधरोष्ठौ यस्य तादृशं प्रतिषेधाक्षरैण मा मा इति वर्णप्रयोगेण यः विक्लवः व्याकुलता तेन अभिरामं मनोहरम् अंसविवर्त्ति अंसे स्कन्धदेशे परावर्त्ति लज्जयेति भावः मुखं कथमपि उन्नमितम् उत्तोलितं न तु चुम्बितम्। अत्र तु इति निपातस्य अनुतापव्यञ्जकत्वं बोध्यम्।

(१२४) तस्या इति। शिलायाम् इयं परिदृश्यमानेत्यर्थः तस्याः प्रियायाः शरीरेण लुलिता मर्दिता पुष्पमयी शय्या एष नलिनीपत्रे नखैरर्पितः रचितः कान्तः मनोज्ञः मन्मथलेखः कामलिपिः, हस्तात् भ्रष्टं च्युतम् इदं बिसस्य मृणालस्य आभरणम् इति एष इत्यर्थः आसज्जमाने द्रष्टुं प्रवृत्ते ईक्षणे नयने यस्य तादृशः आसज्यमानेति पाठे दर्शनव्यापारेण आसज्यमाने सम्बध्यमाने ईक्षणे यस्य स तथोक्तः। अहं शून्यात् प्रिययेति शेषः वेतसगृहात् सहसा निर्गन्तुं न ईशोऽस्मि न शक्नोमीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(१२५) असम्यक् अभद्रं चेष्टितं कृतम्।

इति क्लिष्टं विघ्नैर्गणयति च मे मूढ़हृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥ (१२६)

[नेपथ्ये]। भो भो राजन् !

सायन्तने सवनकर्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ (१२७)

राजा। [आकर्ण्य सावष्टम्भम् (१२८)]। भो भोः तपस्विनः! माभैष्ट माभैष्ट, अयम् अहमागत एव [इति निष्क्रान्तः]।

तृतीयोऽङ्कः।

---

(१२६) रह इति। यदि पुनः सुवदना प्रिया रहः एकान्ते प्रत्यासत्तिं सन्निधिं यास्यति प्राप्स्यति, तदा कालं न हास्यामि न परिहरिष्यामि। हि यतः विषयाः कामाः प्रकृत्या स्वभावेन दुरवापाः दुर्लभाः। विघ्नैः प्रत्यूहैः गौतम्यागमनादिभिः क्लिष्टं व्याहतं मे मूढहृदयम् इति इत्थं गणयति च विचारयति च प्रियायाः प्रत्यक्षं समक्षं किमपि अनिर्वचनीयं यथा तथा कातरमिव च इति कर्त्तव्यतायां विक्लवमिव च। उत्प्रेक्षालङ्कारः। शिखरिणीवृत्तम्।

(१२७) सायन्तने इति। सायन्तने सन्ध्याकालीने सवनकर्मणि यज्ञकर्मणि सम्प्रवृत्ते प्रारब्धे इत्यर्थः हुताशनवतीं होमाग्निदीपितां वेदिं यज्ञभूमिं परितः समन्तात् प्रकीर्णाः पतिता इत्यर्थः बहुधा भयम् आदधानाः जनयन्तः सन्ध्याभ्रवत् सायन्तनमेघवत् कपिशाः कृष्णपीताः पिशिताशनानां राक्षसानां छायाः प्रतिबिम्बानि छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः चरन्ति भ्रमन्ति। वसन्ततिलकं वृत्तम्।

(१२८) सावष्टम्भं सधैर्यम्।

# चतुर्थोऽङ्कः ।

 Dinesh Chandra

ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ ।

अनसूया । हला पिअम्वदे ! जइवि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा (१) पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता, तहवि मे ण णिव्वुदं हिअअं (क) ।

प्रियंवदा । कधंविअ ? (ख)

अन । अज्ज सो राएसी इट्ठिपरिसमत्तीए (२) इसिहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इमं जणं सुमरेदि ण वत्ति (ग) ।

प्रियं । एत्थ दाव वीसत्था होहि, ण हि तादिसा आकिदिविसेसा गुणविरहिणो (३) होन्ति । एत्तिअं उण

---

(क) अयि प्रियंवदे ! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता तथापि मे न निर्वृतं हृदयम् ।

(ख) कथमिव ?

(ग) अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति न वेति ।

---

(१) निर्वृत्तकल्याणा सम्पन्नमङ्गला निर्वृत्तमनोरथेति यावत् । निर्वृतं सुखितं सुस्थमिति यावत् ।

(२) इष्टिपरिसमाप्त्या यज्ञसमापनेन ।

(३) गुणविरहिणः निर्गुणा इत्यर्थः यत्र आकृतिः तत्र गुणा वसन्तीति आप्तात् ।

चिन्तणीअं तादो तीत्थयात्तादो पड़िणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पड़िवज्जिस्सदित्ति (क) । (४)

अन । जधा मं पुच्छसि तधा अभिमदं तादस्स (ख) ।

प्रियं । कधंविअ ? (ग)

अन । अणुरूवस्स वरस्स हत्थे कणआ पड़िबादणीअ(५) त्ति अअं दाव पढ़मो कप्पो । तं जइ देव्वं सम्पादेदि णं कअत्थो (६) गुरुअणो (घ) ।

प्रियं । एवस्स दम् । [पुष्पभाजनं विलोक्य] । सहि ! अवचिदाइं क्खु बलिकम्मपज्जत्ताइं (७) कुसुमाइं (ङ) ।

अन । णं सउन्तलाएबि सोहग्गदेवदाओ अच्चिदव्वाओ ता अवराइं पि अवचिणुह्म (च) ।

---

(क) अत्र तावच्चिन्त्यता भव, न हि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति एतावत् पुनश्चिन्तनीयं, तातस्तीर्थयात्रातः प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

(ख) यथा मां पृच्छसि तथाभिमतं तातस्य ।

(ग) कथमिव ।

(घ) अनुरूपस्य वरस्य हस्ते कन्या प्रतिपादनीयेति अयं तावत् प्रथमःकल्पः । तं यदि दैवं सम्पादयति ननु कृतार्थो गुरुजनः ।

(ङ) एवमिदम् । सखि ! अवचितानि खलु बलिकर्मपर्य्याप्तानि कुसुमानि ।

(च) ननु शकुन्तलाया अपि सौभाग्यदेवता अर्चयितव्यास्तदपराण्यपि अवचिनुवः ।

(४) प्रतिपत्स्यते मंस्यते ।

(५) प्रतिपादनीया समर्पणीया ।

(६) कृतार्थः सिद्धकामः ।

(७) बलिकर्म्मपर्य्याप्तानि पूजाद्यर्य्ययोग्यानि ।

प्रियं । जुज्जदि (क) । [इति तदेव कर्माभिनयतः] ।

[नेपथ्ये] । अयमहं भोः !

अन । [कर्णं दत्त्वा] । सहि ! अदिधिणा विश्र णिवे-
दिदं (ख) ।

प्रियं । णं उडए सरिणहिदा सउन्तला (ग) ।

अन । आं, अज्ज उण असरिणहिदा हिअएण (८) तेण
हि भोदु एत्तिकेहिं कुसुमेहिं पश्रोजणं ( घ ) । [ इति
प्रस्थिते] ।

[पुनर्नेपथ्ये] । आः कथमतिथिं मां परिभवसि ?

> विचिन्तयन्ती यमनन्यमानसा
> तपोनिधिं वेत्सि न मामुपस्थितम् ।
> स्मरिष्यति त्वां न स बोधितोऽपि सन्
> कथां प्रमत्तः प्रथमं कृतामिव ॥ (९)

---

(क) युज्यते ।

(ख) सखि ! अतिथिनेव निवेदितम् ।

(ग) ननु उटजे सन्निहिता शकुन्तला ।

(घ) आम् अद्य पुनरसन्निहिता हृदयेन, तेन हि भवतु एतावद्भिरेव कुसुमैः
प्रयोजनम् ।

(८) हृदयेन असन्निहिता हृदयशून्येत्यर्थः हृदयस्य राजगामित्वादिति भावः ।

(९) विचिन्तयन्तीति । अनन्यमानसा एकचित्ता सती यं विचिन्तयन्ती
तपोधनम् माम् उपस्थितं न वेत्सि न बुध्यसे, स जनः बोधितोऽपि सम्यक्
ज्ञापितोऽपि सन् प्रमत्तः प्रथमं कृताम् उक्तामित्यर्थः कथामिव त्वां न स्मरिष्यति।
उपमालङ्कारः । वंशस्थविलं वृत्तम् ।

उभे । [श्रुत्वा विषण्णे] ।

प्रियं । हद्धी हद्धी ! तं ज्जेव संवुत्तं जं मए चिन्तिदं, कस्सिं पि पूआरिहे अवरद्धा (१०) सुसहिअआ पिअसही सउन्तला (क) ।

अन । [पुरोऽवलोक्य] । ण क्खु जस्सिं कस्सिं पि । एसो दुव्वासा सुलहकोवो महेसी तधा सविअ अविरल-पादतुवराए गदीए पड़िणिउत्तो (ख) ।

प्रियं । को अस्सो हुदवहादो पहवदि दहिदुं, ता गच्छ पाएसुं पड़िअ णिउत्तावेहि, जाव से अहं पि अग्घोदअं उवकप्पेमि (ग) । (११)

अन । तह (घ) । [इति निष्क्रान्ता] ।

प्रियं । [पदान्तरे स्खलितं रूपयन्ती] । अम्मो ! आवे-

(क) हा धिक्, हा धिक् ! तदेव संवृत्तं यन्मया चिन्तितं कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी शकुन्तला ।

(ख) न खलु यस्मिन् कस्मिन्नपि, एष दुर्वासाः सुलभकोपो महर्षिः तथा शप्त्वा अविरलपादत्वरया गत्या प्रतिनिवृत्तः ।

(ग) कोऽन्यो हुतवहात् प्रभवति दग्धुं, तद्गच्छ पादयोः पतित्वा निवर्तय यावदस्याहमपि अर्घोदकमुपकल्पयामि ।

(घ) तथा ।

(१०) अपराद्धा अपराधिनी ।

(११) उपकल्पयामि आहरामि ।

अक्खलिदाए गदीए परिब्भट्टं मे अग्गहत्थादो पुप्फभाअणं (क) । (१२) [इति पुष्पावचयं रूपयति] ।

अन । [प्रविश्य] । सहि ! सरीरो विअ कोवो कस्स अणुणअं सो गेह्णदि ? किञ्च उण सो अणुकम्पिदो मए (ख)

प्रियं । एदं ज्जेव तस्सिं बहुदरं, ता कधेहि कधं तुए पसादिदो ? (ग) ।

अन । जदो णिउत्तिदुं ण इच्छदि, तदो पाएसु पड़िअ विण्णविदो मए, भअवं! पढ़मं (१३) त्ति पेक्खिअ अविण्णादतवप्पहावस्स (१४) दुहिदिजणस्स अअं अवराहो भअदा मरिसिदव्वो त्ति (घ) ।

प्रियं । तदो तदो (ङ) ।

(क) अहो आवेगस्खलितया गत्या परिभ्रष्टं मेऽग्रहस्तात् पुष्पभाजनम् ।

(ख) सखि ! शरीरीव कोपः कस्यानुनयं स गृह्णाति ? किञ्च पुनः सोऽनुकम्पितो मया ।

(ग) एतदेव तस्मिन् बहुतरम्, तत्कथय कथं त्वया प्रसादितः ?

(घ) यदा निवर्त्तितुं नेच्छति तदा पादयोः पतित्वा विज्ञापितो मया, भगवन् ! प्रथममिति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य अयमपराधो भवता मर्षयितव्य इति ।

(ङ) ततस्ततः ।

(१२) पुष्पभाजनं पुष्पपात्रम् ।

(१३) प्रथमं नूतनम् अपराद्धमिति शेषः न कदाचित् पूर्वं कृतमिति भावः ।

(१४) अविज्ञाततपःप्रभावस्य महिमानमजानत इत्यर्थः ।

अन । तदो तेण भणिदं, ण मे वअणं अणधा भविदुं अरिहदि, किन्तु आहरणाहिणाणदंसणेण (१५) से सावो णिउत्तिस्सदित्ति मन्तअन्त ज्जेव (१६) अन्तरिदो (क) ।

प्रियं । सक्कं दाणिं आस्ससिदुं, अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं, एस ज्जेव तस्सिं साहीणो उवाओ (१७) भविस्सदि (ख) ।

अन । सहि ! एहि देवकज्जं दाव से णिव्वत्तेह्म (ग) । [इति परिक्रामति] ।

प्रियं । [अवलोक्य] । अणसूए ! पेक्ख दाव वामहत्थ-विणिहिदवअणा आलिहिदा (१८) विअ पिअसही तग्ग-

(क) ततस्तेन भणितं, न मे वचनमन्यथा भवितुमर्हति, किन्तु आभरणाभिज्ञानदर्शनेन अस्याः शापो निवर्तिष्यत इति मन्त्रयन्नेवान्तरितः । [ ]

(ख) शक्यमिदानीमाश्वसितुम् अस्ति तेन राजर्षिणा सम्प्रस्थितेन आत्मनो नामाङ्कितमङ्गुरीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव परिधापितम् एष तस्मिन् स्वाधीन उपायो भविष्यति ।

(ग) सखि ! एहि देवकार्य्यं तावदस्या निर्वर्त्तयावः ।

(१५) आभरणाभिज्ञानेति अभिज्ञायते अनेनेति अभिज्ञानम् आभरणमेव अभिज्ञानम् आभरणाभिज्ञानं तस्य दर्शनेन ।

(१६) मन्त्रयन्नेव आलपन्नेव ।

(१७) तस्मिन् स्वाधीन उपाय इति तस्मिन् शापे स्वाधीनः आत्मायत्तः उपायः विमोचनस्य इति भावः ।

(१८) आलिखिता चित्रिता ।

दाए (१९) चिन्ताए अत्ताणंपि ण विभावेदि किं उण आगन्तुअं (क)। (२०)।

अन। हला! दोसं ज्जेव णो हिअए एसो वुत्तन्तो चिट्ठदु रक्खणीआ क्खु पइदिपेलवा (२१) पिअसही (ख)।

प्रियं। को दाव उसोदएण णोमालिअं सिञ्चदि? (ग)।

इत्युभे निष्क्रान्ते।

विष्कम्भकः। (२२)

ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः।

शिष्यः। वेलोपलक्षणार्थम् (२३) आदिष्टोऽस्मि तत्रभवता प्रवासात् (२४) प्रतिनिवृत्तेन कण्वेन, तत्प्रकाशं निर्गत्य

(क) अनसूये! प्रेक्षस्व तावद्वामहस्तविनिहितवदना आलिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति किं पुनरागन्तुकम्।

(ख) सखि! द्वयोरेवावयोर्हृदये एष वृत्तान्तस्तिष्ठतु, रक्षणीया खलु प्रकृतिपेलवा प्रियसखी।

(ग) कस्तावदुष्णोदकेन नवमालिकां सिञ्चति?

---

(१९) तद्गतया तं गतया तया राजविषयिण्येत्यर्थः।

(२०) आगन्तुकम् अतिथिम्।

(२१) प्रकृतिपेलवा स्वभावमृद्वी।

(२२) विष्कम्भकः। वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः। मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजित इत्युक्तलक्षणः।

(२३) वेलोपलक्षणार्थं वेलायाः समयस्य उपलक्षणार्थं निर्णयार्थम्।

(२४) तत्रभवता पूज्येन। प्रवासात् अन्यदेशवासात् सोमतीर्थात् इति यावत्।

अवलोकयामि कियदवशिष्टं रजन्या इति । [परिक्रम्यावलोक्य च] ।

हन्त ! प्रभातप्राया (२५) रजनी । तथाहि

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
आविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥ (२६)

अपिच, अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि ॥ (२७)

(२५) प्रभातप्राया प्रायेण प्रभाता ।

(२६) यातीति । ओषधीनां तृणज्योतिर्लतानां वा शस्यविशेषाणां पतिः चन्द्रः एकतः एकस्यां दिशि प्रतीच्यामिति यावत् अस्तस्य अचलस्य शिखरं याति गच्छति । अर्कः सूर्य्यः एकतः एकस्यां दिशि आविष्कृतः प्रकाशितः अरुणः स्वसारथिः पुरःसरः अग्रगः यस्य तथाभूतः उदयोन्मुख इत्यर्थः । एष लोकः भुवनं लोकस्तु भुवने जने इत्यमरः । तेजोद्वयस्य चन्द्रसूर्य्ययोरिति यावत् व्यसनम् अस्तगमनं चय इति यावत् उदयः अभ्युन्नतिरित्यर्थः ताभ्यां दशान्तरेषु अवस्थाभेदेषु युगपत् समकालं नियम्यत इव शिक्ष्यत इव सर्वेषामेव इत्थं चयोदयौ स्तः कोऽपि नाम चिरस्थायीति ज्ञाप्यते इव इति निष्कर्षः । उत्प्रेक्षालङ्कारः । वसन्ततिलकं वृत्तम् ।

(२७) अन्तर्हिते इति । शशिनि चन्द्रमसि अस्तंगते सैवेयं कुमुद्वती संस्मरणीया सम्यक् स्मरणविषयिणी शोभा यस्याः तादृशी विनष्टकान्तिरिति यावत् सती दृष्टिं नयनं न नन्दयति न प्रीणयति । तथाहि अबलाजनेन नारीजनेन इष्टस्य

अपि च, कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या,
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ (२८)
पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैः
अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ (२९)

---

कान्तस्य प्रवासेन भिन्नदेशवर्त्तित्वेन विच्छेदेन इति यावत् जनितानि उत्पादितानि दुःखानि नूनं निश्चितं दुरुद्वहानि दुःसहानीत्यर्थः । प्रियविरहे नार्य्यः न शोभन्ते इति भावः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ।

(२८) कर्कन्धूनामिति । अग्रसन्ध्याः प्रातःसन्ध्या प्रातःकाल इत्यर्थः कर्कन्धूनां बदरीणां तत्फलानां वा उपरि तुहिनं हिमं रञ्जयति सरागं करोति । मयूरः वीता गता निद्रा यस्य तथोक्तः सन् दार्भं दर्भैर्निर्मितम् उटजपटलं पर्णशालाच्छदिं मुञ्चति त्यजति । एष च हरिणः खुरैः विलिखितात् कुट्टितात् वेदिप्रान्तात् यज्ञभूमिप्रान्तदेशात् उत्थितः सद्यस्तत्क्षणं स्वाङ्गं स्वम् अवयवम् आयच्छमानः प्रसारयन् सन् पश्चात् अङ्गप्रसारणानन्तरम् उच्चैः दीर्घोन्नतदेह इति भावः भवति । स्वभावोक्तिरलङ्कारः तथा च दर्पणः । स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनमिति । मन्दाक्रान्तावृत्तम् ।

(२९) पादन्यासमिति । क्षयितं नाशितं तमः अन्धकारो येन तथोक्तेन येन चन्द्रेण क्षितिधराणां पर्वतानां गुरोः श्रेष्ठस्य सुमेरोः मूर्द्ध्नि शिरसि पादन्यासं मयूखपातं चरणनिक्षेपञ्च कृत्वा विष्णोः वामनरूपस्य नारायणस्य मध्यमं धाम गगनमित्यर्थः क्रान्तम् अधिकृतमिति यावत् सोऽयं चन्द्रः एतादृशमहावीरोऽपि इति भावः अल्पाः शेषा येषां तथोक्तैः किञ्चिन्मात्रावशिष्टैः मयूखैः उपलक्षितः

अनसूया । [पटीक्षेपेण] (३०) [प्रविश्य] । एव्वं णाम विसयपरम्मुहस्स (३१) ण णिवड़िदं (३२) जधा तेण रस्सा सउन्तलाए अणज्जं आचरिदं त्ति (क) ।

शिष्यः । यावदुपस्थितां होमवेलां गुरवे निवेदयामि । [इति निष्क्रान्तः] ।

अन । णं पहादा रअणी ता सिग्धं सअणं परिच्चयामि, अधवा लहु लहु उत्थिदावि किं करिस्सं ?, ण मे उइदेसु (३३) पहादकरणीएसुं हत्थपाआ प्पसरन्ति, कामो दाणिं सकामो (३४) भोदु, जेण असच्चसन्धे (३५) जणे पिअसही

---

(क) एवं नाम विषयपराङ्मुखस्य जनस्य न निपतितं यथा तेन राज्ञा शकुन्तलायामनार्य्यमाचरितमिति ।

---

तृतीया गगनात् पतति अस्तं गच्छतीति भावः । युक्तञ्चैतदित्याह अत्यारूढ़िरिति अत्यारूढ़िः अतिवृद्धिः महतामपि अपभ्रंशः चयः निष्ठा अन्तः अवसानमित्यर्थः यस्याः तथाभूता निष्ठा निष्पत्तिनाशान्ता इत्यर्थः । भवति । अतिवृद्धौ कोऽपि चिरं न तिष्ठतीति भावः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । मन्दाक्रान्ता वृत्तम् ।

(३०) पटीक्षेपेण जवनिकामपसार्य्येत्यर्थः ।

(३१) विषयेति । विषयाः स्रक्चन्दनवनितादयः भोग्यवस्तूनि तेभ्यः पराङ्मुखस्य निवृत्तविषयाभिलाषस्य इत्यर्थः । जनस्य मादृशस्य तापसजनस्य इति भावः ।

(३२) निपतितम् उपस्थितम् ।

(३३) उचितेषु आवश्यकेष्वित्यर्थः ।

(३४) सकामः सिद्धमनोरथः ।

(३५) असत्यसन्धे मिथ्याप्रतिज्ञे अनृतभाषिणि इत्यर्थः ।

सुद्धहिअआ(३६) पदं कारिदा । [स्मृत्वा] । अथवा ण तस्स राएसिणो अवराहो, दुव्वाससावो क्खु एसो पहवदि (३७) अण्णधा कधं सो राएसी तादिसाइं मन्तिअ एत्तिअस्स कालस्स वात्तामात्तं पि ण विसज्जेदि (३८) [विचिन्त्य] । ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम, अधवा दुक्ख-सीले तवस्सिजणे को अब्भत्थीअदु (३९) णं सहीगामी दोसोत्ति व्ववसाइदुं पि ण पारेमि (४०) तादकस्सस्स वा प्पवासपडिणिउत्तस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्तलं णिवेदिदुं, ता एत्थ दाणिं किं णु क्खु अह्मेहिं करि-णिज्जं ? (क) ।

---

(क) ननु प्रभाता रजनी, तच्छीघ्रं शयनं परित्यजामि, अथवा लघु लघु उत्थितापि किं करिष्यामि, न मे उचितेषु प्रभातकरणीयेषु हस्तपादं प्रसरति, काम इदानीं सकामो भवतु, येन असत्यसन्धे जने प्रियसखी शुद्धहृदया पदं कारिता । अथवा न तस्य राजर्षेरपराधः दुर्वासःशाप खल्वेष प्रभवति, अन्यथा

(३६) शुद्धहृदया सरलेत्यर्थः ।

(३७) प्रभवति प्रभावं दर्शयति ।

(३८) विसर्जयति प्रेषयति ।

(३९) दुःशीले तपस्विजने दुःशीलेषु तपस्विजनेष्वित्यर्थः निर्द्धारे सप्तमी जातावेकत्वम् । कः तापस इति शेषः अभ्यर्थ्यतां राजसन्निधौ प्रेषणार्थमनुरुध्यताम् ? अभ्यर्थनमनुचितमिति भावः ।

(४०) सखीगामीति दोषः सखीं शकुन्तलां गच्छतीति तादृशः गोपने कथमेवम् अज्ञातशीले जने प्रणयः कृत इत्येवम् अपराधः सख्यां रटिष्यतीति हेतोः व्यवसाय-यितुं चेष्टितुं राजसकाशे वार्त्ताप्रेषणादिकं कर्त्तुमिति भावः । न पारयामः न शक्नुमः ।

प्रियं । [प्रविश्य] । अणसूए ! तुवर तुवर सउन्तलाए पत्थाणकोदूहलं (४१) णिव्वत्तिदुं (क) ।

अन । [सविस्मयम्] सहि ! कहं विअ ? (ख) ।

प्रियं । सुणाहि, दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं (४२) सउन्तलाए सआसं गदह्मि (ग) ।

अन । तदो तदो ? (घ) ।

प्रियं । तदो णं लज्जावणदमुहीं परिस्सइअ सअं तादकस्सेण एव्वं अहिणन्दिदं, वच्छे ! दिट्ठिआ धूमोवरुद्धदिट्ठिणो (४३) वि जजमाणस्स पावअस्स (४४) ज्जेव मुहे

अथं स रजर्षिरेतावन्त्यहानि मन्त्रयित्वा एतावतः कालस्य वार्त्तामात्रमपि न विसर्जयति ?। तदितोऽभिज्ञानमङ्गुरीयकं तस्य विसर्जयामः, अथवा दुःखशीले तपस्विजने कोऽभ्यर्थ्यतां, ननु सखीगामी दोष इति व्यवसाययितुमपि न पारयामः, तातकण्वस्य वा प्रवासात् प्रतिनिवृत्तस्य दुष्मन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुं, तदवेदानीं किं नु खलु अस्माभिः करणीयम् ।

(क) अनसूये ! त्वरस्व त्वरस्व शकुन्तलाया प्रस्थानकौतूहलं निर्वर्त्तयितुम् ।

(ख) सखि ! कथमिव ?

(ग) शृणु, इदानीमेव सुखसुप्तिकापृच्छननिमित्तं शकुन्तलायाः सकाशं गतास्मि ।

(घ) ततस्ततः ?

---

(४१) प्रस्थानकौतूहलं पतिगृहगमनार्थं माङ्गलिकविधिमिति भावः ।

(४२) सुखसुप्तिकेति सुखेन सुप्तिः निद्रा तस्याः पृच्छननिमित्तं सुखेन निद्रां गतासि ? इति जिज्ञासार्थमिति यावत् ।

(४३) दिष्ट्या भाग्येन । धूमेन उपरुद्धा आच्छन्ना दृष्टिर्यस्य तादृशस्य ।

(४४) पावकस्य अग्नेः ।

आहुदी (४५) णिवड़िदा, सुसिस्सपरिदिणा विग्र ग्रसो-अणीग्रासि मे संवुत्ता, अज्ज ज्जेव तुमं इसिपरिरक्खिदं करिग्र भत्तुणो सग्रासं विसज्जेमि त्ति (क) ।

अन । सहि ! केण उण आचक्खिदो तादकस्सस्स ग्रग्रं वुत्तन्तो ? (ख) ।

प्रियं । अग्गिसरणं (४६) पविट्टस्स किल शरीरं विणा छन्दोमईए वाग्राए (ग) । (४७)

अन । [सविस्मयम्] । कधं विग्र ? (घ) ।

प्रियं । सुणाहि (ङ) । [संस्कृतमाश्रित्य] ।

दुष्मन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ (४८)

---

(क) तत एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकण्वेन एवम् अभिनन्दितं, वत्से ! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता, सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता, अद्यैव त्वां ऋषिपरिरक्षितां कृत्वा भर्तुः सकाशं विसर्जयामीति ।

(ख) सखि ! केन पुनराख्यातस्तातकण्वस्यायं वृत्तान्तः ।

(ग) अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा ।

(घ) कथमिव ?

(ङ) शृणु ।

(४५) आहूयते सम्यक् मन्त्रेण प्रक्षिप्यते इति आहुतिः हवनीयं घृतादिक-मित्यर्थः ।

(४६) अग्निशरणम् अग्निगृहं होमशालामित्यर्थः ।

(४७) छन्दोमय्या छन्दसा रचितया वाचा वाक्येन श्लोकेन इत्यर्थः ।

(४८) दुष्मन्तेन इति । हे ब्रह्मन् ! दुष्मन्तेन आहितं निहितं तेजः शुक्रं

अन । [प्रियंवदामाश्लिष्य] । सहि ! पिअं मे पिअं, किन्तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परिदोसं अणुभवेमि (क) । (४९)

प्रियं । सहि ! अम्हे कधं पि उक्कण्ठं विणोदइस्सामो (५०) सा दाणिं तवस्सिणी णिव्वुदा (५१) होदु (ख) ।

अन । तेण हि एदस्सिं चूअसाहावलम्बिदे णारिएल-समुग्गए एदस्सिमित्तं (५२) ज्जेव मए कालहरणक्खमा केसरगुण्ठा णिक्खित्ता (५३) चिट्ठदि ता इमं णलिणीवत्त-

---

(क) सखि ! प्रियं मे प्रियं, किन्तु अद्यैव शकुन्तला नीयते इति उत्कण्ठा-साधारणं परितोषमनुभवामि ।

(ख) सखि ! वयं कथमपि उत्कण्ठां विनोदयिष्यामः, सा इदानीं तपस्विनी निर्वृता भवतु ।

भुवः पृथिव्या भूतये सम्पत्तये अभ्युदयायेत्यर्थः भूतिर्भस्मनि सम्पदीत्यमरः । दधा-नाम् अतएव अग्निः गर्भे उदरे यस्याः तादृशीं शमीं तदाख्यतरुमिव तनयां कन्याम् अवेहि जानीहि । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(४९) उत्कण्ठासाधारणं विषादसदृशं शकुन्तलायाः पतिलाभभावितया यादृशो हर्षः भवति अस्माभिः विरहिता भविष्यतीति च तथा विषाद इति उभयम् अनुभवामि भुञ्जे ।

(५०) उत्कण्ठां तद्विरहदुःखमित्यर्थः विनोदयिष्यामः अपनेष्यामः ।

(५१) तपस्विनी वराकी निर्वृता सुखिनी ।

(५२) नारिकेलसमुद्गके नारिकेलसम्पुटे । एतन्निमित्तमेव शकुन्तलायाः पतिगृहप्रस्थानकालिकमङ्गलसमाधानार्थमेव इत्यर्थः ।

(५३) कालहरणक्षमा दीर्घकालेनापि विकृतिमनापद्यमानेत्यर्थः । केशर-गुण्डाः बकुलरेणवः । निक्षिप्ता निहिताः ।

मङ्गदं करेहि, जाव से अहंपि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालहणं विरएमि (क)। (५४)

[प्रियंवदा तथा करोति। अनसूया निष्क्रान्ता]।

[नेपथ्ये]। गौतमि! आदिश्यन्तां शार्ङ्गरवशारद्वत-मिश्राः वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्त इति।

प्रियं। अणसूए! तुवर तुवर एदे क्खु हत्थिणाउरगा-मिणो इसीओ सद्दावीअन्ति (ख)।

अनसूया। [समालभनहस्ता प्रविश्य]। सहि! एहि गच्छम्ह (ग)। [इति परिक्रामतः]।

प्रियं। [विलोक्य]। एसा सुज्जोदए किदमज्जणा पडि-च्छिदणीवारभाअणाहिं, सोत्थिवाअणिआहिं (५५) ताव-

(क) तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालान्तरक्षमा केशरगुण्डा निक्षिप्ता तिष्ठति तदिमां नलिनीपत्रसङ्गतां कुरु, यावत् अस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गल-समालभनं विरचयामि।

(ख) अनसूये! त्वरस्व त्वरस्व, एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते।

(ग) सखि! एहि गच्छामः।

(५४) मङ्गलसमालभनं मङ्गलार्थं तत्तद्द्रव्याहरणम्। विरचयामि करोमि।

(५५) कृतमज्जना कृतस्नाना। प्रतीष्टनीवारभाजनाभिः गृहीतनीवार-पात्राभिः। स्वस्तिवाचनिकाभिः स्वस्ति शुभं भूयादिति वचनम् आशीर्वचनम् इत्यर्थः तदर्थमागताः स्वस्तिवाचनिकाः ताभिः।

सीहिं अहिणन्दीअमाणा (५६) चिट्ठदि सउन्तला, ता उव-
सप्पह्म णं (क)।

[इत्युभे तथा कुरुतः]।

ततः प्रविशति यथानिर्दिष्टव्यापारा सपरिवारा शकुन्तला।

शकु। भअवदीओ वन्दामि (ख)।

गौत। जादे! भत्तुणो बहुमाणसुहहेतुअं देवीसद्दं अहिगच्छ (ग)।

तापस्यः। वीरप्पसविणी होहि (घ)। [इत्याशिषो दत्त्वा गौतमीवर्ज्जं सर्वा निष्क्रान्ताः]।

सख्यौ। [उपगम्य]। सम्मज्जणं (५७) दे भूदं? (ङ)।

शकु। साअदं पिअसहीणं? इदो णिसीदध (च)।

सख्यौ। [उपविश्य]। हला! उज्जुआ (५८) दाव होहि, जाव दे मङ्गलसमालहणं करेह्म (छ)।

(क) एषा सूर्य्योदये कृतमज्जना प्रतीष्टनीवारभाजनाभिः स्वस्तिवाचनिकाभिः तापसीभिः अभिनन्द्यमाना तिष्ठति शकुन्तला, तदुपसर्पाव एनाम्।

(ख) भगवतीर्वन्दे।

(ग) जाते! भर्त्तुः बहुमानसुखहेतुकं देवीशब्दमधिगच्छ।

(घ) वीरप्रसविनी भव।

(ङ) सम्मज्जनं ते भूतम्?

(च) स्वागतं प्रियसख्योः? इतो निषीदतम्।

(छ) अयि! ऋजुका तावद्भव यावत्ते मङ्गलसमालभनं कुर्वः।

(५६) अभिनन्द्यमाना आशिषा संवर्द्ध्यमानेत्यर्थः।

(५७) सम्मज्जनम् स्नानम्।

(५८) ऋजुका सरला।

शकु। उइदं पि एदं अज्ज बहुमणिदव्वं जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं भविस्सदि (क)। [इति वाष्पं विसृजति]।

सख्यौ। सहि! ण जुत्तं मङ्गलकाले रोइदुं (ख)।

इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः।

प्रियं। सहि! आहरणोचिदं दे रूअं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि (ग)। (५९)

[प्रविश्य आभरणहस्तः ऋषिकुमारः]। इदम् अलङ्कारजातम् अलङ्क्रियताम् आयुष्मती।

[सर्वा विलोक्य विस्मिताः]।

गौत। वच्छ हारीद! कुदो इदं आसादिदं? (घ)

हारी। तातकण्वप्रभावात्।

गौत। किं माणसी सिद्धी (ङ)? (६०)

हारी। न खलु, श्रूयतां तत्रभवता कण्वेन वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति। ततश्च

---

(क) उचितमपि एतदद्य बहु मन्तव्यं, यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति।

(ख) सखि! न युक्तं मङ्गलकाले रोदितुम्।

(ग) सखि! आभरणार्हं ते रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्य्यते।

(घ) वत्स हारीत! कुत इदम् आसादितम्?

(ङ) किं मानसी सिद्धिः?

---

(५९) विप्रकार्य्यते विकृतीक्रियते।

(६०) मानसी सिद्धिः मनःसङ्कल्पमात्रेण अलङ्करणजातस्य अधिगमः इत्यर्थः।

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं,
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैः
दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः ॥ (६१)

प्रियं। [शकुन्तलां विलोक्य]। हला ! कोडरसम्भवावि महुअरी पोक्खरमहु ज्जेव ष्टहिलसदि (क)। (६२)

गौत। जादे ! इमाए अब्भुववत्तीए (६३) सुइदा भत्तुणो गेहे अणुहोदव्वा राअलच्छी (ख)। (६४)

---

(क) अयि ! कोटरसम्भवापि मधुकरी पुष्करमधु एव अभिलषति ।

(ख) जाते ! अनया अभ्युपपत्त्या सूचिता भर्त्तुर्गेहे अनुभवितव्या राजलक्ष्मीः।

---

(६१) क्षौममिति। केनचित् तरुणा इन्दुपाण्डु चन्द्रोज्ज्वलं माङ्गल्यं मङ्गलाय हितं क्षौमं दुकूलम् आविष्कृतं प्रकटितं दत्तमिति यावत्। केनचित् तरुणा चरणयोरुपरागः रञ्जनं तस्मिन् सुभगः प्रियः मनोरम इत्यर्थः लाक्षारस अलक्तकद्रवः निष्ठ्यूतः निःसार्य्य दत्त इत्यर्थः। अन्येभ्यः तरुभ्यः किसलयस्य छाया कान्तिः तस्याः परिस्पर्द्धिभिः अनुकारिभिः आपर्वभागात् उत्थितैः उन्नतैः वनदेवतानां करतलैः आभरणानि अलङ्काराः नः अस्मभ्यं दत्तानि अर्पितानि। अत्र इन्दुपाण्डुरिति किसलयच्छायापरिस्पर्द्धिभिरिति एतयोरुपमालङ्कारयोः संसृष्टिः। शार्दूलविक्रीड़ितं वृत्तम्।

(६२) कोटरेति कोटरे गर्त्ते वृक्षाणामिति शेषः सम्भवः उत्पत्तिर्यस्याः तथोक्तापि। पुष्करमधु कमलमधु। अत्र मधुकरी पुष्करमधुरूपात् समादप्रस्तुतात् प्रस्तुतायाः शकुन्तलायाः वनजाताया अपि अलङ्कारार्हतायाः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। तदुक्तं दर्पणे। क्वचिद् विशेषः सामान्यात् सामान्यं वा विशेषतः कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्। अप्रस्तुतप्रशंसा स्यादिति।

(६३) अभ्युपपत्त्या अनुग्रहेण वनदेवतानामिति शेषः।

(६४) अनुभवितव्या भोक्तव्या। राजलक्ष्मीः राजसम्पद्।

शकु। लज्जां नाटयति।

हारी। यावत् इमां वनस्पतिसेवाम् अभिषेकार्थं (६५) मालिनीम् अवतीर्णाय तत्रभवते कण्वाय निवेदयामि। [इति निष्क्रान्तः]।

अन। सहि! अणणुभूदभूसणो (६६) अअं जणो कधं तुमं अलङ्करेदि। [चिन्तयित्वा विलोक्य च]। चित्तपरिचएण (६७) दाणिं दे अङ्गेसुं आहरणविणिओअं करेम्ह (क)।

शकु। जाणामि वो णिउणत्तणं (ख)। (६८)

सख्यौ नाट्येन अलङ्कारान् विनियुञ्जाते।

ततः प्रविशति स्नानोत्तीर्णः कण्वः।

कण्वः। [विचिन्त्य]

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
अन्तर्वाष्पभरोपरोधि गदितं, चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः,
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः? (६९)

[इति परिक्रामति]।

---

(क) सखि! अननुभूतभूषणोऽयं जनः कथं त्वाम् अलङ्करोति। चित्रपरिचयेन इदानीं तेऽङ्गेषु आभरणविनियोगं कुर्मः।

(ख) जानामि वो निपुणत्वम्।

---

(६५) अभिषेकार्थं स्नानार्थम्।

(६६) अननुभूतेति अननुभूतम् अभुक्तं भूषणं येन तथाभूतः।

(६७) चित्रपरिचयेन आलेख्यलिखितानां रमणीनाम् अलङ्कारदर्शनसंस्कारेण इत्यर्थः।

(६८) निपुणत्वं वैदग्ध्यम्।

(६९) यास्यतीति। अद्य शकुन्तला यास्यति पतिगृहमिति शेषः इति हेतोः

सख्यौ। हला सउन्तले! अवसिदमण्डणासि, (७०) सम्पदं परिहेहि क्खोमजुअलं (क)। (७१)

शकु। [उत्थाय सांशुकं परिधत्ते]।

गौत। जादे! एस दे आणन्दवाप्पपरिवाहिणा (७२) लोअणेण परिस्सजन्तो विअ गुरू (७३) उवत्थिदो, ता समुदाआरं (७४) पड़िवज्जस्स (ख)।

शकु। [सव्रीड़ं वन्दनां करोति]।

(क) अयि शकुन्तले! अवसितमण्डनासि, साम्प्रतं परिधेहि क्षौमयुगलम्।

(ख) जाते! एष ते आनन्दवाष्पपरिवाहिणा लोचनेन परिष्वजमान इव गुरुरुपस्थितः, तत् समुदाचारं प्रतिपद्यस्व।

---

हृदयं ममेति शेषः उत्कण्ठया संस्पृष्टम् आक्रान्तम्। गदितं वचनम् अन्तर्वाष्पाणाम् अन्तर्गतानाम् अश्रूणां भरेण अतिशयेन यः उपरोधः स्खलनं स विद्यते यस्येति तथोक्तम्। अन्तर्वाष्पोपरुद्धमित्यर्थः। दर्शनं चक्षुः चिन्तया जड़ं मन्थरं कलुषभावमापन्नम् इत्यर्थः। अरण्यं वनम् ओकः स्थानं यस्य तथोक्तस्य वनवासिनोऽपि मम स्नेहात् अपत्यवात्सल्यात् ईदृशम् एवंप्रकारं वैक्लव्यं कातर्य्यं तावत् सर्वतः इत्यर्थः भवतीति शेषः। अतः गृहिणः गृहस्थाः नवैः अपूर्वैरित्यर्थः तनयायाः कन्यायाः विश्लेषदुःखैः विच्छेदजक्लेशैः कथं न पीड्यन्ते नाभिभूयन्ते अपि तु पीड्यन्त एवेत्यर्थः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्।

(७०) अवसितमण्डना परिहितभूषणा।

(७१) क्षौमयुगलं दुकूलयुग्मम्।

(७२) आनन्दवाष्पपरिवाहिणा आनन्दाश्रुवर्षिणा।

(७३) परिष्वजमान इव आलिङ्गन्निव। गुरुः पिता।

(७४) समुदाचारं सम्यक् उत्कृष्टमाचारं पितरि कर्त्तव्यं गौरवमिति भावः।

कण्वः । वत्से !

ययातेरिव शर्मिष्ठा भर्त्तुर्बहुमता भव ।

पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ (७५)

गौत । जादे ! वरो क्खु एसो ण आसिसो (क) । (७६)

कण्वः । वत्से ! इतः सद्यो हुतानग्नीन् (७७) प्रदक्षिणीकुरुष्व ।

सर्वे तथा कारयितुं परिक्रामन्ति ।

कण्वः । वत्से !

अमी वेदिं परितः क्लृप्तधिष्ण्याः

समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।

अपघ्नन्तो दुरितं हव्यगन्धैः

वैतानास्त्वां वह्नयः पावयन्तु ॥ (७८)

---

(क) जाते ! वरः खलु एष नाशिषः ।

(७५) ययातेरिति । शर्मिष्ठा ययातेरिव त्वं भर्त्तुः दुष्मन्तस्य पत्युरिति पाठान्तरम् । बहुमता बह्वादरिणी भव । सा शर्मिष्ठा पूरुमिव त्वमपि सम्राजं चक्रवर्त्तिनं पुत्रम् आप्नुहि लभस्व । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(७६) वर इति एषः गुरुवचनमित्यर्थः वरः अवश्यम्भाविफलकः वाग्व्यापार इत्यर्थः । आशिषः आशीर्वादाः शुभकामनाविशेषाः तासां फलं प्रति अवश्य-साधकत्वं नास्तीति भावः ।

(७७) सद्यः इदानीमेव हुतान् आज्येन तर्पितान् ।

(७८) अमी इति । वेदिं यज्ञभूमिं परितः समन्ततः उपरीत्यर्थः क्लृप्तं कृतं धिष्ण्यं स्थानं येषां तथोक्ताः वेद्यां स्थापिता इत्यर्थः समिधः काष्ठानि सन्ति एषां तथोक्ताः दह्यमानेन्धना इत्यर्थः प्रान्तेषु संस्तीर्णाः प्रक्षिप्ता दर्भाः कुशा येषां तथाभूताः हव्यानां हवनीयद्रव्याणां गन्धैः सौरभैः दुरितं पापम् अपघ्नन्तः नाशयन्तः वैताना यज्ञिया वह्नयः त्वां पावयन्तु पवित्रीकुर्वन्तु । दौर्भाग्यसूचकं दुरदृष्टं अपयन्त्विति भावः । वातोर्मी वृत्तं, वातोर्मीयं गदिता म्भौ तगौ ग इति लक्षणात् ।

शकु। [प्रदक्षिणं करोति]।

कण्वः। वत्से! प्रतिष्ठस्व इदानीम्। [सदृष्टिक्षेपम्]। क्वनु ते शार्ङ्गरवशारद्वतमिश्राः?

शिष्यौ। [प्रविश्य]। भगवन् इमौ स्वः।

कण्वः। वत्सौ! भगिन्याः पन्थानम् आदेशयतम्।

शिष्यौ। इत इतो भवती।

[सर्वे परिक्रामन्ति]।

कण्वः। भो भोः सन्निहितवनदेवतास्तपोवनतरवः!

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं, सर्वैरनुज्ञायताम्॥ (७९)

[आकाशे]।

रम्यान्तरः कमलिनीहरितैः सरोभिः
छायाद्रुमैर्नियमितार्कमरीचितापः।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः॥ (८०)

---

(७९) पातुमिति। या युष्मासु असिक्तेषु युष्माकम् आलवालेषु अपूरितेषु इति भावः प्रथमम् अग्रे जलं पातुं न व्यवस्यति नेच्छति। या प्रियं मण्डनं भूषणं यस्याः तथोक्ता अलङ्कारप्रियापि इत्यर्थः भवतां स्नेहेन नवं किसलयं न आदत्ते न छिनत्ति। वः कुसुमप्रवृत्तिसमये पुष्पविकाससमये आदौ अग्रतः यस्याः उत्सवः आनन्दः भवति, सा इयं शकुन्तला पतिगृहं याति सर्वैः युष्माभिः अनुज्ञायताम् अनुमन्यताम्। शार्दूलविक्रीडितं वृत्तम्।

(८०) रम्यान्तर इति। अस्याः शकुन्तलायाः पन्थाः प्रस्थानमार्गः कमलिनीभिः हरितैः श्यामैरित्यर्थः सरोभिः रम्यं मनोज्ञम् अन्तरम् अवकाशः यस्य तथोक्तः,

[सर्वे सविस्मयम् आकर्णयन्ति] ।

शार्ङ्ग । [कोकिलशब्दं सूचयित्वा] । भगवन् !

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः ॥ (८१)

गौत ! जादे ! णादिजणसिणिद्धाहिं (८२) अणुण्णादगमणासि तवोवणदेवदाहिं, ता पणम भअवदीणं (क) ।

शकु । [सप्रणामं परिक्रम्य जनान्तिकम्] । हला पिअंवदे ! अज्जउत्तदंसणुस्सुआएवि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण (८३) चलणा मे पुरोमुहा (८४) ण णिवड़न्ति (ख)

---

(क) जाते ! ज्ञातिजनस्निग्धाभिः अनुज्ञातगमनासि तपोवनदेवताभिः, तत्प्रणम भगवतीः ।

(ख) अयि प्रियंवदे ! आर्य्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन चरणौ मे पुरोमुखौ न निपततः ।

---

छायाप्रधानाः द्रुमाः छायाद्रुमाः तैः छायावद्भिर्वृक्षैरित्यर्थः नियमितः निवर्त्तितः अर्कमरीचीनां सूर्य्यमयूखानां तापः यत्र तादृशः, कुशेशयानां कमलानां रजांसीव परागा इव मृदवः कोमलाः रेणवो यत्र तथाविधः तथा शान्तः मन्दः अनुकूलः पृष्ठप्रवर्त्तित्वात् सुभग इत्यर्थः पवनः वायुर्यत्र तथोक्तः अतएव शिवः कल्याणसूचक इत्यर्थः भूयात् भवतु । काव्यलिङ्गमलङ्कारः । वसन्ततिलकं वृत्तम् ।

(८१) अनुमतेति । यतः यस्मात् एभिः तरुभिः कलं मधुरास्फुट परभृतानां कोकिलानां विरुतं रवः आत्मनः स्वस्य प्रतिवचनीकृतं प्रत्युत्तरत्वेन प्रकटितम् इत्यर्थः ततः कारणात् इयं शकुन्तला वनवासिन बन्धुभिः सुहृद्भिः तरुभिः अनुमतं गमनं यस्याः तथोक्ता पतिगृहगमनाय अनुज्ञातेत्यर्थः । अपरवक्त्रं वृत्तम्, अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जराविति लक्षणात् ।

(८२) ज्ञातीति ज्ञातिजना इव स्निग्धाः अथवा ज्ञातिजनेषु पित्रादिषु तवेति भावः स्निग्धाः अनुरागवत्यः ताभिः ।

(८३) दुःखदुःखेन अतिदुःखेन ।

(८४) पुरोमुखौ अग्रेसरौ इत्यर्थः ।

प्रियं । ण केवलं तुमं ज्जेव तवोवनविरहकादरा, तुए उव-
त्थिदविओअस्स तवोवनस्सवि अवत्थं पेक्ख दाव (क)।
उग्गिलदब्भकवला मई, परिच्चत्तणच्चणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ (ख) ॥ (८५)

शकु । [स्मृत्वा] । ताद ! लदाबहिणीं (८६) दाव माहवीं आमन्तइस्सं (ग)। (८७)

कण्वः । वत्से ! अवैमि ते तस्यां सौहार्दं, इयं सा दक्षिणे पश्य ।

शकु । [उपेत्य लतामालिङ्ग्य] । लदाबहिणि ! पच्चालिङ्गस्स मं साहामएहिं बाहुहिं, अज्ज पहुदि दूरवत्तिणी क्खु दे भविस्सं । ताद ! अहं विअ इअं तुए चिन्तणीआ।(घ)।

(क) न केवलं त्वमेव तपोवनविरहकातरा, त्वया उपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् ।

(ख) उद्गीर्णदर्भकवला मृगी, परित्यक्तनर्त्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रुव लताः ॥

(ग) तात ! लताभगिनीं तावन्माधवीम् आमन्त्रयिष्यामि ।

(घ) लताभगिनि ! प्रत्यालिङ्ग मां शाखामयैर्बाहुभिः, अद्य प्रभृति दूरवर्त्तिनी खलु ते भविष्यामि, तात ! अहमिव इयं त्वया चिन्तनीया।

---

(८५) उद्गीर्णेति । मृगी उद्गीर्णः उद्वान्तः दर्भकवलः कुशग्रासः यया तादृशी, मयूरी परित्यक्तं नर्त्तनं यया तथोक्ता । तव विरहपर्य्युत्सुकतया मृगी ग्रासं मयूरी च नृत्यं परित्यजतीत्यर्थः । चेतनेषु इयम् अवस्थितिरिति भावः । लताश्च अचेतना अपीति भावः अपसृतानि गलितानि पाण्डूनि परिणतानीति भावः पत्राणि यासां तथाविधाः सत्यः अश्रु इव बाष्पमिव मुञ्चन्ति त्यजन्ति । उत्प्रेक्षालङ्कारः ।

(८६) लताभगिनीं लता एव भगिनी तां भगिनीरूपं लतामित्यर्थः ।

(८७) आमन्त्रयिष्यामि सम्भाषिष्ये । अवैमि जानामि ।

कण्वः । वत्से !

सङ्कल्पितं प्रथममेव मया त्वदर्थे
भर्त्तारमात्मसदृशं सुगुणैर्गतासि ।
चूतस्य सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं समीपसहकारमिमं करिष्ये ॥ (८८)

तदितः प्रस्थानं प्रतिपद्यस्व । (८९)

शकु । [सख्यावुपेत्य] । हला ! एसा (९०) दोसं पि वो हत्थे णिक्खेवो (क) । (९१)

सख्यौ । अअं जणो दाणिं कस्स हत्थे समप्पिदो ? (ख) [इति वाष्पं विसृजतः] ।

कण्वः । अनसूये ! प्रियंवदे ! अलं रुदितेन, ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या ।

[इति सर्वे परिक्रामन्ति] ।

(क) अयि ! एषा द्वयोरपि युवयोर्हस्ते निक्षेपः ।

(ख) अयं जन इदानीं कस्य हस्ते समर्पितः ।

(८८) सङ्कल्पितमिति । प्रथममेव आदौ एव त्वदर्थे तव सत्पात्रे अर्पणार्थे मया सङ्कल्पितं चिन्तितम् । त्वं सुगुणैः निजसौन्दर्य्यादिभिः आत्मनः सदृशम् अनुरूपं भर्त्तारं पतिं गतासि प्राप्तासि । सम्प्रति त्वयि वीतचिन्तः निश्चिन्तः अहम् इमं समीपसहकारं सन्निहितरसालतरुम् अस्याः माधवीलतायाः कान्तं रम्यं वरं करिष्ये । वसन्ततिलकं वृत्तम् ।

(८९) प्रतिपद्यस्व कुरु ।

(९०) एषा माधवीलतेत्यर्थः ।

(९१) निक्षेपः न्यासः ।

शकु । [विलोक्य] । ताद ! एसा उडअपज्जन्तचारिणी गब्भहारमन्थरा (९२) मिअबहू जदा सुहप्पसवा भविस्सदि, तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि, मा एदं विसुमरिस्ससि (क)। (९३)

कण्वः । वत्से ! नेदं विस्मरिष्यामि ।

शकु । [गतिभेदं रूपयित्वा]। अम्भो ! कोणु क्खु एसो पदक्कन्तो(९४)विअ मे पुणो पुणो वसणन्ते सज्जदि (ख) ? (९५) [इति परावृत्यावलोकयति] ।

कण्व । वत्से !

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ (९६)

---

(क) तात ! एषा उटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधूः यदा सुखप्रसवा भविष्यति तदा मे कमपि प्रियनिवेदकं विसर्जयिष्यसि, मा इदं विस्मरिष्यसि ।

(ख) अहो ! को नु खल्वेष पदाक्रान्त इव मे पुनःपुनः वसनान्ते सज्जते ।

---

(९२) गर्भभारमन्थरा गर्भभारेण अलसा ।

(९३) विसर्जयिष्यसि प्रेषयिष्यसि ।

(९४) पदाक्रान्त इव पादलग्न इव ।

(९५) सज्जते लगति ।

(९६) यस्येति । त्वया व्रणविरोहणं क्षतशोषकम् इङ्गुदीनां तैलं यस्य कुशसूचिभिः कुशाग्रैः विद्धे क्षते मुखे न्यषिच्यत निषिक्तं दत्तं श्यामाकानां दाख्य घासविशेषाणां मुष्टिभिः परिवर्द्धितः पोषितः स अयं ते तव पुत्रकृतकः

शकु। वच्छ ! किं मं सहवासपरिच्चाइणीं अणुबन्धेसि ? णं अचिरप्पसूदोवरदाए (९७) जणणीए विणा जधा मए वड्ढिदोसि तधा दाणिं पि मए विरहिदं तादो तुमं चिन्त-इस्सदि, ता णिवत्तस्स (क)। [इति रुदती प्रस्थिता]।

कण्वः। वत्से ! अलं रुदितेन, स्थिरा भव, इतः पन्थानम् आलोकय।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया शिथिलानुबन्धम्।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ (९८)

शिष्यौ। भगवन् ! ओदकान्तं ( ९९ ) स्निग्धोऽनुगम्यत

---

(क) वत्स ! किं मां सहवासपरित्यागिनीमनुबध्नासि ? ननु अचिर-प्रसूतोपरतया जनन्या विना यथा मया वर्द्धितोऽसि तथेदानीमपि मया विरहितं तातस्त्वां चिन्तयिष्यति, तन्निवर्त्तस्व।

---

पुत्रत्वेन परिगृहीतः मृगः ते तव पदवीं पन्थानं न जहाति न त्यजति। वसन्त-तिलकं वृत्तम्।

(९७) अनुबध्नासि अनुगच्छसि। अचिरं सद्यःप्रसूता उपरता मृता च तया।

(९८) उत्पक्ष्मणोरिति। स्थिरतया धैर्य्यमवलम्ब्येत्यर्थः उद्गतं पक्ष्म लोम ययोस्तादृशयोः नयनयोः उपरुद्धा निरुद्धा वृत्तिर्व्यापारः येन तथाभूतं बाष्पम् अश्रुजलं शिथिलः ह्रासं गतः अनुबन्धः सातत्यं यस्य तथोक्तं कुरु मा रुदिहीति भावः। खलु यतः अस्मिन् अलक्षितः अदृष्टः नतोन्नतः बन्धुर इत्यर्थः भूमिभागः भूप्रदेशो यस्मिन् तथाभूते मार्गे ते तव पदानि पदनिक्षेपा इत्यर्थः विषमीभवन्ति स्खलन्ति। वसन्ततिलकं वृत्तम्।

(९९) ओदकान्तम् उदकान्तात् आ ओदकान्तं जलदर्शनपर्य्यन्तमित्यर्थः।

इति श्रूयते, तत् इदं सरसीतीरम्, अत्र नः सन्दिश्य (१००) प्रतिगन्तुम् अर्हसि ।

कण्वः । तेन हि इमां क्षीरवृक्षच्छायाम् ( १०१ ) आश्रयामः ।

[सर्वे । तथा नाटयन्ति] ।

कण्वः । किन्नु खलु तत्रभवतो दुष्मन्तस्य युक्तरूपं सन्देष्टव्यम् (१०२) [इति चिन्तयति] ।

अन । सहि ! अस्समपदे ण अत्थि कोवि चित्तवन्तो (१०३) जो तुए विरहिज्जन्तो ण ताम्मदि, (१०४) पेक्ख दाव

पुड़इणिवत्तन्तरिअं वाहरिओवि ण वाहरेइ पिअं ।
मुह उव्वूढ़मिणालो तइ दिट्ठिं देइ चक्काओ (क) ॥ (१०५)

---

(क) सखि ! आश्रमपदे नास्ति कोऽपि चित्तवान् यः त्वया विरह्यमाणो न ताम्यतीति प्रेक्षस्व तावत् ।

---

(१००) नः अस्मान् सन्दिश्य सन्देशं दत्त्वा ।

(१०१) क्षीरवृक्षच्छायां क्षीरप्रधानो वृक्षः क्षीरवृक्षः शाकपार्थिववत् समासः । वटतरुरित्यर्थः तस्य छाया ताम् ।

(१०२) युक्तरूपम् अनुरूपमित्यर्थः । सन्देष्टव्यं वाचिकं प्रेषयितव्यमित्यर्थः ।

(१०३) चित्तवान् सचेताः प्राणीत्यर्थः ।

(१०४) न ताम्यति न क्लाम्यति न कातरो भवतीत्यर्थः ।

(१०५) पुटकिनीति । चक्र इति आह्वा आख्या यस्य तथोक्तः चक्रवाकः इत्यर्थः व्याहृतोऽपि आहूतोऽपि प्रिययेति शेषः पुटकिन्याः पद्मिन्याः पत्रैः अन्तरितां व्यवहितां प्रियां चक्रवाकीं न व्याहरति नालपति । मुखे उद्व्यूढं धृतं मृणालं येन तथाभूतः सन् त्वयि दृष्टिं ददाति न तु भक्षयतीति भावः ।

कण्वः। वत्स शार्ङ्गरव! इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः। (१०६)

शार्ङ्ग। आज्ञापयतु भवान्।

कण्वः।

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया,
भाग्याधीनमतःपरं न खलु तत् स्त्रीबन्धुभिर्याच्यते॥ (१०७)

---

पद्मिनीपत्रान्तरितां व्याहृतोऽपि न व्याहरति प्रियाम्।
मुखमुद्गूढमृणालस्त्वयि दृष्टिं ददाति चक्राह्वः॥

---

(१०६) पुरस्कृत्य अग्रे कृत्वा। अभिधातव्यः वक्तव्यः।

(१०७) अस्मानिति। अस्मान् संयम एव धनं येषां तान् तपोधनान् इत्यर्थः एतेन तपोधनानाम् अपमानना न कार्य्या प्रत्युत तत्र अमङ्गलमेव इति कन्यायाः पतिगृहप्रेषणकाले बहुधनादियौतकदानं क्रियते इति लोकसमाचारः, अस्माकन्तु तपोमात्रधनत्वात् तदसङ्गतिरिति च सूचितम्। आत्मनः स्वस्य उच्चैः महत् कुलं वंशञ्च पूरुवंशस्य महामहिमत्वेन तत्र कलङ्को नापतेदिति भावः, अस्याः शकुन्तलायाः त्वयि अबान्धवकृतां बान्धवैः पित्रादिभिरकृतां स्वयं गान्धर्वविधिना कृतामिति भावः तां तादृशीमित्यर्थः स्नेहप्रवृत्तिं प्रणयसञ्चारञ्च साधु सम्यक् विचिन्त्य विचार्य्य त्वया इयं शकुन्तला दारेषु स्त्रीषु मध्ये सामान्यप्रतिपत्तिपूर्वकं साधारणज्ञानेन इत्यर्थः यथा अन्या भार्य्या दृश्यते तथेति भावः दृश्या पालनीयेति भावः। अतःपरम् अस्मात् अधिकम् अधिकसम्मानमिति यावत् भाग्याधीनं शुभादृष्टायत्तं यदि अस्याः शुभादृष्टं स्यात् तदा बह्वादरिणी भविष्यतीति भावः। तत् अधिकसम्मानमित्यर्थः स्त्रीबन्धुभिः स्त्रियाः पित्रादिभिः न खलु नैव याच्यते प्रार्थ्यते। शार्दूलविक्रीडितं वृत्तम्।

शार्ङ्ग । गृहीतोऽयं सन्देशः ।

कण्वः । [शकुन्तलां विलोक्य] । वत्से ! त्वम् इदानीम् अनुशासनीयासि, वनौकसोऽपि वयं लौकिकज्ञा (१०८) एव ।

शार्ङ्ग । भगवन्! न खलु कश्चित् अविषयो (१०९) नाम धीमताम् । (११०)

कण्वः । सा त्वम् इतः पतिगृहं प्राप्य,

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने, भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ (१११

गौतमी वा किं मन्यते । (११२)

(१०८) अनुशासनीया उपदेष्टव्या । वनौकसः वनवासिनः । लौकिकज्ञाः लौकिकाचारविदः ।

(१०९) अविषयः अगोचरः ।

(११०) धीमतां बुद्धिमताम् ।

(१११) शुश्रूषस्वेति । गुरून् पूज्यान् जनान् शुश्रूषस्व सेवस्व, सपत्नीजने प्रियसखीवृत्तिं प्रियवयस्याव्यवहारं कुरु । विप्रकृतापि अपमानितापि भर्त्रेति शेषः रोषणतया कोपनतया भर्त्तुः प्रतीपं प्रतिकूलतामित्यर्थः मा स्म गमः न गच्छ प्रतिकूलवर्त्तिनी मा भवेत्यर्थः । परिजने पोष्यवर्गे भूयिष्ठम् अत्यर्थं दक्षिणा उदाराशया भव । तथा भोगेषु सुखसम्पदां लाभेषु इत्यर्थः अनुत्सेकिनी अगर्विणी भवेति शेषः । एवं सति युवतयः गृहिणीपदं यान्ति लभन्ते, वामाः एतत्प्रतिकूलवर्त्तिन्य इत्यर्थः कुलस्य पितृश्वशुरवंशस्य आधयः मनस्तापकारिण्यः भवन्तीति शेषः । पुंस्याधिर्मानसी व्यथेत्यमरः । शार्दूलविक्रीडितं वृत्तम् ।

(११२) मन्यते वक्ति इत्यर्थः ।

गौत। एत्तिओ क्खु वहूजणे उवदेसो। जादे! एदं क्खु हिअए करेहि, मा विसुमरिस्ससि (क)।

कण्वः। वत्से! एहि परिष्वजस्व मां सखीजनञ्च।

शकु। ताद! इदोज्जेव किं पिअसहीओ णिउत्ति-स्सन्ति? (ख)

कण्वः। वत्से! इमे अपि प्रदेये, तत्र युक्तम् अनयोः तत्र गन्तुं (११३) त्वया सह गौतमो गमिष्यति।

शकु। [पितुरङ्कमाश्लिष्य]। कधं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअपव्वदादो उम्मूलिदा चन्दनलदा विअ देसन्तरे जीविदं धारइस्सं? (ग)

कण्वः। वत्से! किम् एवं कातरासि?

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे

विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला।

---

(क) एतावान् खलु वधूजने उपदेशः। जाते! एतं खलु हृदये कुरु, मा विस्मरिष्यसि।

(ख) तात! इत एव किं प्रियसख्यौ निवर्त्तिष्येते?

(ग) कथमिदानीं तातस्य अङ्कात् परिभ्रष्टा मलयपर्वतादुन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि।

---

(११३) अनयोः सख्योरित्यर्थः तत्र राजधान्यां गन्तुं न युक्तं न उचितम् अपरिणतवयस्कत्वेन दोषसम्भवादिति भावः।

(११४) अभिजनवत इति। हे वत्से! त्वम् अभिजनवतः महाकुलीनस्य भर्त्तुः स्वामिनः श्लाघ्ये प्रशस्ये गृहिणीपदे महिषीपदे स्थिता तथा अस्य भर्त्तुः विभवेन सम्पदा गुरुभिः महद्भिः कृत्यैः नित्यनैमित्तिककाम्यैः कर्मभिः प्रतिक्षण

तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि ॥ (११४)

[ शकु । [पितुः पादयोः पतित्वा] । ताद ! वन्दामि (क) ।

कण्वः । वत्से ! यत् अहम् इच्छामि तदस्तु ते ।

शकु । [सख्यावुपगम्य] । सहीओ ! एध, दुवेबि मं समं ज्जेव परिस्सजध (ख) ।

सख्यौ । [तथा कृत्वा] । सहि ! जइ णाम सो राएसी पच्चहिसाणमन्थरो (११५) भवे तदो से इमं अत्तणो णामधेअङ्किदं अङ्गुलीअअं दंसइस्ससि (ग) ।

शकु । इमिणा वो सन्देसेण कम्पिदं मे हिअअं (घ) ॥

(क) तात ! वन्दे ।

(ख) सख्यौ ! एतं, द्वे अपि मां सममेव परिष्वजेथाम् ।

(ग) सखि ! यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्, तदास्य इदमात्मनो नामधेयाङ्कितमङ्गुरीयकं दर्शयिष्यसि ।

(घ) अनेन वां सन्देशेन कम्पितं मे हृदयम् ।

सततम् आकुला व्यस्ता सती अचिरात् अविलम्बेन प्राची पूर्वा दिक् अर्कमिव सूर्यमिव पावनं जगत्पवित्रकरं तनयं प्रसूय जनयित्वा च मम विरहजां मद्वियोगजनितां शुचं शोकं न गणयिष्यसि न चिन्तयिष्यसि मां न स्मरिष्यसीत्यर्थः । उपमालङ्कारः । हरिणीवृत्तम्, न समरसलागः षड्वेदैर्हयैर्हरिणी मतेति लक्षणात् ।

(११५) प्रत्यभिज्ञानमन्थरः परिचयजडः ।

(११६) पापम् अनिष्टम् ।

सख्यौ । सहि ! मा भाआहि, सिणेहो पाव-(११६) मासङ्कदि (क)।

शार्ङ्ग । भगवन् ! दूरम् अधिरूढ़: सविता, तत् त्वरय अत्रभवतीम् ।

शकु । [भूयः पितुरङ्कमाश्लिष्य आश्रमाभिमुखीभूय च] । ताद ! कदा णु क्खु भूओ तवोवणं पेक्खिस्सं ? (ख)

कण्वः । वत्से !

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय ।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्ते करिष्यति पदं पुनराश्रमेऽस्मिन् ॥ (११७)

गौत । जादे ! परिहीअदि (११८) दे गमणवेला, ता

(क) सखि ! मा बिभीहि, स्नेहः पापमाशङ्कते ।
(ख) तात ! कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये ?

(११७) भूत्वेति । चिराय चिरकालं व्याप्य सदिगन्ता दिगन्तसहिता या मही पृथिवी तस्याः सपत्नी समभर्तृका सदिगन्तमहीशपत्नीति पाठे सदिगन्तमह्या ईशः पतिः तस्य पत्नीत्यर्थः भूत्वा नास्ति प्रतिरथः प्रतिवीरः यस्य तादृशं दुष्मन्तस्य अपत्य पुमान् दौष्मन्ति तनयं पुत्रं प्रसूय उत्पाद्य तस्मिन् पुत्रे सन्निवेशिता सन्निहिता धूः राज्यभारो येन तथोक्तेन धूः स्त्री स्याद् भारचिन्तयोरित्यमरः । भर्त्रा पत्या सहैव न तु एकाकिन्येति एवकारार्थः । शान्ते अस्मिन् आश्रमे पुनः पदं स्थानं स्थितिमित्यर्थः करिष्यसि । शान्त्यै इति पाठे शान्त्यैः शान्त्यर्थम् इत्यर्थः । वसन्ततिलकं वृत्तम् ।

(११८) परिहीयते अतिक्रामति देवादिकोऽयं हाधातुरात्मनेपदी ।

णिउत्तावेहि पिदरं, अथवा चिरेणवि एसा ण णिउत्तइ-स्सदि, ता णिउत्तदु भवं (क) ।

कण्वः । वत्से ! उपरुध्यते (११९) मे तपोऽनुष्ठानम् ।

शकु । तवच्चरणवावारेण निरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता (ख)

कण्वः । वत्से ! माम् एवं जडीकरोषि । [निःश्वस्य] (१२०)
अपयास्यति मे शोकः कथं नु वत्से ! त्वया रचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ (१२१)
गच्छ, शिवास्ते (१२२) सन्तु पन्थानः ।

इति निष्क्रान्ताः शकुन्तलया सह गौतमीशार्ङ्गरवशारद्वतमिश्राः ।

(क) जाते ! परिहीयते ते गमनवेला, तन्निवर्त्तय पितरम्, अथवा चिरेण अपि एषा न निवर्त्तयिष्यति, तन्निवर्त्ततां भवान् ।

(ख) तपश्चरणव्यापारेण निरुत्कण्ठस्तातः, अहं पुनरुत्कण्ठाभागिनी संवृत्ता ।

---

(११९) उपरुध्यते परिहीयते इत्यर्थः ।

(१२०) जडीकरोषि जडतामापादयसि जाड्येन मां योजयसीत्यर्थः ।

(१२१) अपयास्यतीति । नु इति सम्बोधनसूचकमव्ययं हे वत्से ! त्वया रचितपूर्वं पूर्वं रचितं विन्यस्तं पक्षिणामाहारार्थमिति भावः उटजस्य कुटीरस्य द्वारे विरूढं जातम् अङ्कुरितमिति यावत् नीवारबलिं नीवाररूप पूजोपकरणं विलोकयतः पश्यतः मे मम शोकः त्वद्वियोगज इति शेषः कथं केन प्रकारेण अपयास्यति निवर्त्स्यति इत्यर्थः नैव निवर्त्स्यति इत्यर्थः प्रत्युत शोको वर्द्धिष्यते इति भावः । आर्य्याजातिः ।

(१२२) शिवाः कल्याणदाः सन्तु भवन्तु ।

सख्यौ । [चिरं विचिन्त्य सकरुणम्] । हद्धी हद्धी !
अन्तरिदा (१२३) सउन्तला वणराइहिं (ग) ।

कण्वः । [सनिःश्वासम्] । अनसूये ! प्रियंवदे । गता
वां सहचरी, निगृह्य शोकावेगं माम् अनुगच्छतम् ।

[सर्वे प्रस्थिताः] ।

उभे । ताद ! सउन्तलाविरहिदं सुसं विअ तवोवणं
पविसह्म (ख) ।

कण्वः । स्नेहप्रवृत्तिरेवंदर्शिनी । [सविमर्शं परिक्रम्य] (१२४)
हन्त, भोः ! शकुन्तलां पतिगृहे विसर्ज्य (१२५) लब्धम्
इदानीं स्वास्थ्यम् (१२६) । कुतः

अर्थो हि कन्या परकीय एव,
तामद्य संप्रेष्य परिग्रहीतुः ।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा ॥ (१२७)

इति निष्क्रान्ताः सर्वे ।

चतुर्थोऽङ्कः ।

---

(ग) हा धिक्, हा धिक् ! अन्तरिता शकुन्तला वनराजिभिः ।

(ख) तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः ।

---

(१२३) अन्तरिता व्यवहिता दृष्टिपथात् अपनीता इत्यर्थः ।

(१२४) सविमर्षं सचिन्तम् । परिक्रम्य इतस्ततः चरणौ निक्षिप्य ।

(१२५) विसर्ज्य प्रस्थाप्य ।

(१२६) स्वास्थ्यं निश्चिन्तता इत्यर्थः ।

(१२७) अर्थ इति । कन्या परकीय एव अर्थः परधनमिव । अद्य तां कन्यां

# पञ्चमोऽङ्कः ।

ततः प्रविशति कञ्चुकी । (१)

कञ्चु । अहो बत ! (२) कीदृशीं वयोऽवस्थाम् आपन्नो(३)ऽस्मि ।

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय ॥ (४)

---

परिग्रहीतुः परिणेतुः सकाशे इति शेषः सम्प्रेष्य प्रस्थाप्य चिरस्य चिरकालात् परं निक्षेपं न्यस्तधनम् अर्पयित्वा इव धनिने समर्प्य इव सद्यः सहसा साम्प्रतं वा विशदः निर्मलः निश्चिन्त इत्यर्थः अन्तरात्मा अन्तःकरणं यस्य तथाभूतः जातः अस्मि अभवमित्यर्थः । उपमारूपकयोः संसृष्टिः । उपजातिवृत्तम् ।

---

(१) कञ्चुकी अन्तःपुरचारी वृद्धविप्रविशेषः । अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणः ।

(२) अहो आश्चर्य्ये बत खेदे ।

(३) वयोऽवस्थां वयसः जीवनस्य अवस्थां दशाम् । आपन्नः प्राप्तः ।

(४) आचार इति । अधिकृतेन अधिकारस्थितेन मया राज्ञः अवरोधगृहेषु अन्तःपुरगृहेषु आचार इति नियम इति हेतो या: वेत्रयष्टिः गृहीता अवरोधेषु अन्यायवर्त्तिनां शासनार्थमिति भावः । बहुतिथे बहूनां पूरणे काले गते अतीते सति सैव वेत्रयष्टिरेव प्रस्थाने गमने विक्लवा स्खलनबाहुल्यात् विधुरा गतिः पदनिक्षेपो यस्य तादृशस्य मम अवलम्बनाय आश्रयाय जाता । साम्प्रतम् ईदृग्

यावदभ्यन्तरगताय देवाय स्वम् अनुष्ठेयम् अकालक्षेपार्हं (५) निवेदयामि। [स्तोकम् अन्तरं (६) गत्वा]। किं पुनस्तत् (७) [विचिन्त्य]। आं, ज्ञातं (८) कण्वशिष्याः तपस्विनो देवं द्रष्टुम् इच्छन्ति, भोः चित्रम् (९) एतत्।

क्षणात् प्रबोधमायाति, लङ्घ्यते तमसा पुनः।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः॥ (१०)

[परिक्रम्यावलोक्य च]। एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा,
निषेवते श्रान्तमना विविक्तम्।
यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः॥ (११)

दुर्बलता जाता यत् यष्टिं विना पदमपि चलितुं न शक्नोमीति भावः। वसन्ततिलकं वृत्तम्।

(५) अभ्यन्तरगताय अन्तःपुरवर्त्तिने देवाय। अनुष्ठेयं कर्त्तव्यं वाक्यमिति यावत् अकालक्षेपार्हं कालविलम्बासहम्।

(६) स्तोकमल्पम्। अन्तरं दूरम्।

(७) तत् अनुष्ठेयमित्यर्थः।

(८) ज्ञातं स्मृतं वार्द्धक्यात् क्षणे क्षणे मतिविभ्रमादिति भावः।

(९) चित्रम् आश्चर्य्यम्।

(१०) क्षणादिति। जरतः स्थविरस्य मतिः बुद्धिः निर्वास्यतः निर्वाणं गमिष्यतः प्रदीपस्य शिखेव क्षणात् प्रबोधं प्रकृष्टं बोधं चैतन्यमित्यर्थः दीप्तिञ्च आयाति प्राप्नोति, पुनः क्षणात् तमसा मोहेन तिमिरेण च लङ्घ्यते आक्रम्यते। उपमालङ्कारः। पथ्यावक्त्रं वृत्तम्।

(११) प्रजा इति। स्वाः स्वकीयाः प्रजा इव पुत्रानिव प्रजा स्वात् सन्ततौ

भोः! सत्यं धर्म्मकार्य्यमनतिपात्यं (१२) देवस्य, तथापि शङ्कितवानस्मि इदानीमेव धर्मासनादुत्थिताय देवाय कण्व-शिष्यागमनं निवेदयितुम्। अथवा कुतो विश्रामो लोक-पालानाम् (१३)। तथाहि

> भानुः सकृद्युक्ततुरङ्ग एव,
> रात्रिन्दिवं गन्धवहः प्रयाति।
> शेषः सदैवाहितभूमिभारः,
> षष्ठांशवृत्तेरपि धर्म्म एषः॥ (१४)

[इति परिक्रामति]।

जने इत्यमरः। प्रजाः अधिकृतान् लोकान् कार्य्यार्थिन इति भावः तन्त्रयित्वा धार-यित्वा तत्तत्कार्य्यदर्शनेन प्रीणयित्वेत्यर्थः श्रान्तं मनो यस्य तथाभूतः सन् यूथानि स्ववर्ग्यान् गजानिति भावः सञ्चार्य्य सम्यक् चारयित्वा रविणा सूर्य्येण प्रतप्तः द्विपेन्द्रः गजपतिः शीतं शीतलं गुहास्थानमिव पर्वतगह्वरमिव विविक्तं विजनं निषेवते अधिवसति विविक्तौ पूतविजनावित्यमरः। उपमालङ्कारः। उपजातिवृत्तम्।

(१२) अनतिपात्यं कालातिक्रमादिना नातिक्रमणीयम्।

(२३) लोकपालानां जगत्पालयितॄणाम्।

(१४) भानुरिति। भानुः सूर्य्यः सकृत् एकवारं युक्ताः रथे नियमितास्तुरङ्गाः येन तथोक्तः एव अविश्रामं रथारूढ़ः समनुक्षेयं निर्वाहयतीति भावः। गन्धवहः वायुः रात्रिन्दिवं प्रयाति वहति नास्य विश्राम इति भावः। शेषः नागराजः सदैव आहितः अवलम्बितः भूमेः भारः येन तथाविधः नासौ क्षणमपि विश्रामसुखं लभते इति भावः। षष्ठांशः उत्पन्नशस्यादीनां षष्ठभागः वृत्तिर्जीवनोपायो यस्य तथोक्तस्य प्रजाभ्यः षष्ठमंशं करत्वेन आदाय जीवत इत्यर्थः राज्ञ इति शेषः एष अविश्रामं कार्य्यदर्शनमिति भावः धर्मः नियमः। दृष्टान्तालङ्कारः। इन्द्रवज्रा वृत्तम्, स्यात् इन्द्रवज्रा यदि तौ जगौ ग इति लक्षणात्।

ततः प्रविशति राजा विदूषको विभवतश्च (१५) परीवारः ।

राजा । [अधिकारखेदं निरूप्य] (१६) । सर्वः प्रार्थितम् अधिगम्य (१७) सुखी सम्पद्यते (१८) जन्तुः, राज्ञान्तु चरितार्थता दुःखोत्तरैव (१९) । कुतः

औत्सुक्यमात्रमवसादयति प्रतिष्ठा,
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् । (२०)

[नेपथ्ये । वैतालिकौ] । जयति जयति (२१) देवः ।

एकः ।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।

---

(१५) विभवतः ऐश्वर्य्यानुसारतः ।

(१६) अधिकारखेदं राजकार्य्यजनितपरिश्रमम् निरूप्य अभिनीय ।

(१७) प्रार्थितम् इष्टम् । अधिगम्य प्राप्य ।

(१८) सम्पद्यते भवति ।

(१९) चरितार्थता सिद्धकामता । दुःखोत्तरा दुःखप्रधाना एव ।

(२०) औत्सुक्यमिति । प्रतिष्ठा अलब्धलाभेन अर्जिता ख्यातिः औत्सुक्यमात्रं कथमदो लभ्यते इति उत्कण्ठामात्रम् अवसादयति नाशयति । अवसाययतीति पाठे स एवार्थः । ततः लब्धस्य परिपालनवृत्तिः शासनव्यापारः क्लिश्नाति एव क्लेशं ददाति एव बिना क्लेशेन नास्य पालनं भवेदिति यावत् । अतः राज्यं स्वहस्तेन धृतः दण्डो यस्य तादृशम् आतपात् सौरतापात् त्रायते इति आतपत्रं छत्रमिव न अतिश्रमापनयनाय अतिशयेन श्रमशान्तये न भवति, यथा श्रमाय भवतीति शेषः । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ।

(२१) जयति सर्वोत्कर्षेण वर्त्ततामित्यर्थः ।

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥ (२२)

द्वितीयः।

नियमयसि विमार्गप्रस्थितानात्तदण्डः,
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः संविभक्ता-
स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम्॥ (२३)

---

(२२) स्वसुखेति। स्वस्य सुखेषु निरभिलाषः निष्कामः सन् स्वं सुखं परित्यजन्नित्यर्थः लोकानां जगतां हेतोः शान्तिविधानार्थमिति भावः प्रतिदिनं खिद्यसे परिश्राम्यसि। अथवा ते तव सृष्टिः निर्माणम् एवंविधैव ईदृश्येव जगतां शुभविधानार्थं विधात्रा त्वं परिश्रमस्वभाव एव निर्मित इति भावः। हि तथाहि पादपः तरुः मूर्ध्ना शिरसा तीव्रं दुःसहमिति यावत् उष्णम् उत्तापम् अनुभवति स्वयं गृह्णाति किन्तु छायया अनातपदानेन "छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपे" इत्यमरः। संश्रितानां तलस्थितानामिति यावत् परितापं सौरतापं शमयति नाशयति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। मालिनी वृत्तम्।

(२३) नियमयसीति। आत्तः गृहीतः दण्डो येन तथाभूतः दण्डधरः सन्नित्यर्थः विमार्गप्रस्थितान् असन्मार्गगामिनः दुराचारान् इत्यर्थः नियमयसि, दण्डयसि। विवादं विरोधं प्रशमयसि शान्तिं नयसि, तथा रक्षणाय लोकानामिति शेषः कल्पसे प्रभवसि। ज्ञातयः स्वजनाः जनानामिति शेषः अतनुषु बहुषु इत्यर्थः विभवेषु सम्पत्सु संविभक्ताः सम्यक् विभज्य स्थापिताः त्वयेति शेषः तु किन्तु जनानां बन्धुकृत्यं स्वजनकृत्यं योगक्षेमपरिदर्शनादिकमिति भावः त्वयि परिसमाप्तं त्वदधीनमिति यावत् लोकानां स्वजना बहुसम्पद्भागिनः कृता अपि ते तान् तान् स्वजनान् न पर्यवेक्षन्ते त्वमेव तान् तत्तत्कार्य्येषु विपत्सु च पर्यवेक्षसे इति भावः। मालिनी वृत्तम्।

राजा। [आकर्ण्य सास्यम्]। एतेन कार्य्यानुशासन-परिश्रान्ताः पुनर्नवीकृताः (२४) स्मः।

विदू। [विहस्य] भोः! गोविन्दारअत्तिभणिदस्स (२५) विसभस्स किं परिस्समो णस्सदि? (क)।

राजा। [सस्मितम्]। ननु क्रियतामासनपरिग्रहः।

उभौ। [उपविष्टौ, परिजनश्च यथास्थानं स्थितः]।

[नेपथ्ये वीणाशब्दः]।

विदू। [कर्णं दत्त्वा]। भो वअस्स! सङ्गीदसालब्भन्तरे कसं देहि, ताललअसुद्धाए (२६) वीणाए सलसंजोओ (२७) सुणिअदि, जाणे तत्थभोदी हंसवदी वस्सपरिचअं (२८) करेदि त्ति (ख)।

---

(क) भो! गोवृन्दारक इति भणितस्य वृषभस्य किं परिश्रमो नश्यति?

(ख) भो वयस्य! सङ्गीतशालाभ्यन्तरे कर्णं देहि, तालखयशुद्धाया वीणायाः स्वरसंयोगः श्रूयते, जाने तत्रभवती हंसवती वर्णपरिचयं करोतीति।

(२४) कार्य्येति। कार्य्यस्य राजकार्य्यस्य अनुशासनेन सम्पादनेन परिश्रान्ताः क्लिष्टाः। एतेन वैतालिकवचनेन इत्यर्थः उत्साहवर्द्धनादिति भावः पुनः नवीकृताः सुस्थीकृताः।

(२५) गोवृन्दारकेति। गवां वृन्दारकेण मुख्येन श्रेष्ठेन इति यावत् भणितस्य प्रशंसितस्य।

(२६) तालेति। तालः सङ्गीतस्य प्रकारविशेषः लयः तस्यैव यतिविशेषः तेन शुद्धा निर्दोषा तस्याः।

(२७) स्वरसंयोगः स्वरैः निषादादिभिः सप्तभिः संयोगः सम्यक् योजना।

(२८) हंसवती काचित् अन्तःपुरिका देवी। वर्णपरिचयं वर्णस्य सङ्गीताचरस्य परिचयः अभ्यासः तम्॥

राजा । तूष्णीं भव, यावत् आकर्णयामि ।

कञ्चु । [विलोक्य] । अन्यासक्तो देवः, (२९) तदवसरं प्रतिपालयामि (३०) [इत्येकान्ते स्थितः] ।

[नेपथ्ये गीयते] ।

अहिणवमहुलोहभाविदो
तह परिचुम्बिअ चूअमञ्जरिम् ।
कमलवसदिमेत्तणिव्वुदो
महुअर ! विह्मरिदोसि णं कहं ? (क) ॥ (३१)

राजा । अहो ! रागपरिवाहिणी (३२) गीतिः ।

(क) अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम् ? ॥

(२९) अन्यासक्तः अन्यस्मिन् विषये आसक्तः अभिनिविष्टः ।

(३०) अवसरं समयं प्रतिपालयामि प्रतीक्षे ।

(३१) अभिनवेति । हे मधुकर ! त्वम् अभिनवस्य नूतनस्य मधुनः लोभेन भावितः आकृष्टः विमोहित इत्यर्थः सन् चूतमञ्जरीम् आम्रमञ्जरीं तथा तेन प्रकारेण यत्नादरेण इति भावः परिचुम्ब्य आस्वाद्येत्यर्थः इदानीं कमले पद्मे या वसतिः वासः तन्मात्रेण निर्वृतः निर्वृतिं सन्तोषं प्राप्त इत्यर्थः सन् एनां चूतमञ्जरीं कथं विस्मृतः असि ? अस्याः विस्मरणं तवानुचितमिति भावः । एतेन राज्ञः शकुन्तलाविस्मरणं सूचितम् । इदञ्च प्रच्छेदकाख्यं लास्याङ्गं तदुक्तं दर्पणे । अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना । वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः । इति प्रकर्षेण छिनत्ति अन्यासङ्गात् विश्लेषयतीति प्रच्छेदक इति बोध्यम् ।

(३२) रागपरिवाहिणी अनुरागवर्षिणीत्यर्थः । प्रेमोल्लासिनीति यावत् ।

विदू । भो वअस्स ! किं दाव से गीदिआए अवि गहीदो भअदा अक्खरत्थो ? (क) । (३३)

राजा । [सस्मितम्] । सकृत्कृतप्रणयो (३४) ऽयं जन इत्यक्षरार्थः । तदहं देवीं हंसवतीमन्तरेण उपालम्भनम् आगतोऽस्मि (३५) सखे माधव्य ! मद्वचनादुच्यतां देवी हंसवती सम्यगुपालब्धः (३६) अस्मीति ।

विदू । जं भवं आणवेदि । [उत्थाय] । भो वअस्स ! गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो (३७) ता वीदराअस्स असरणअस्स (३८) णत्थि मे मोक्खो (ख) । (३९) ।

---

(क) भो वयस्य ! किं तावदस्या गीतिकाया अपि गृहीतो भवता अक्षरार्थः ?

(ख) यद्भवानाज्ञापयति । भो वयस्य ! गृहीतः त्वया परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लः तद्वीतरागस्य अशरणकस्य नास्ति मे मोक्षः ।

---

(३३) अक्षरार्थः शब्दार्थः ।

(३४) सकृदिति । सकृत् एकवारं कृतः प्रणयो येन तथाभूतः । सकृत्-कृतप्रणयं जनं त्यक्त्वा स्थितं प्रियं प्रत्युक्तिरियमिति भावः ।

(३५) हंसवतीमन्तरेण हंसवतीं विना तत्सन्निधावगमनेन इति भावः उपालम्भनं तिरस्कारम् आगतः प्राप्तः ।

(३६) सम्यक् सम्पूर्णं यथा तथा उपालब्धः तिरस्कृतः ।

(३७) शिखण्डके शिखायां शिरसीत्यर्थः अच्छभल्लः भल्लूकः । यथा स्वयमशक्तस्य भल्लूकात् शिखण्डग्रहणाय नियुज्य परस्य तद्ग्रहणोद्यतस्य मृत्युमुखे पातनं तथा कोपनां देवीमनुनेतुं स्वयमशक्तस्य तव मां तत्र नियुज्य देवीहस्तेन मद्व्यापादनम् इति भावः ।

(३८) वीतरागस्य विगतक्रोधस्य अशरणस्य अनाश्रयस्य अगतिकस्य इत्यर्थः ।

(३९) मोक्षः मोचनम् ।

राजा। सखे ! गच्छ नागरिकवृत्त्या (४०) सान्त्वयैनाम्

विदू। का गई (क)। [इति निष्क्रान्तः]।

राजा। [स्वगतम्]। किं नु खलु गीतमेवंविधमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितो(४१)ऽस्मि ? अथवा,

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ (४२)

[इत्यस्मृतिनिमित्तमुन्मनस्कत्वं रूपयति]। (४३)

कञ्चु। [उपसृत्य]। जयति जयति देवः। एते खलु

(क) का गतिः।

(४०) नागरिकवृत्त्या विदग्धभावेन इत्यर्थः।

(४१) बलवत् अत्यर्थम्।

(४२) रम्याणीति। यत् यतः सुखितोऽपि अविरही अपि जन्तुः प्राणी रम्याणि मनोहराणि वस्तूनीति शेषः वीक्ष्य दृष्ट्वा मधुरान् शब्दांश्च निशम्य पर्य्युत्सुकः परितः सर्वतः उत्सुकः उत्कण्ठितः भवति, तत् तस्मात् चेतसा भावेन प्रणयेन स्थिराणि दृढप्रेमाणीत्यर्थः जननान्तरस्य अन्यस्य जन्मनः सौहृदानि प्रणयान् अबोधपूर्वम् अननुभवपुरःसरं यथा तथा स्मरति नूनम् उत्प्रेक्षे। रम्यवस्तुदर्शनेन मधुरगीतश्रवणेन च चित्तस्य पर्य्युत्सुकतायाः कारणं तदानीं केनापि प्रसङ्गेन अबुद्धस्य पूर्वकृतस्य प्रणयस्य स्मरणमिति सम्भावयामीति निष्कर्षः। वसन्ततिलकं वृत्तम्।

(४३) रूपयति अभिनयति।

हिमगिरेरुपत्यकारण्यवासिनः (४४) कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः (४५) । श्रुत्वा देवः प्रमाणम् (४६) ।

राजा । [सविस्मयम्] किं कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः ?

कञ्चु । अथ किम् ।

राजा । तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः (४७) सोमरातः अमून् आश्रमवासिनः श्रौतेन विधिना सत्कृत्य(४८) स्वयमेव प्रवेशयितुमर्हतीति । अहमपि एतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि । (४९)

कञ्चु । यथाज्ञापयति देवः [इति निष्क्रान्तः] ।

राजा । [उत्थाय] । वेत्रवति ! अग्निशरणमार्गम् आदेशय । (५०)

---

(४४) उपत्यकेति उपत्यका आसन्नभूमिः उपत्यकाद्रेरासन्ना भूमिरित्यमरः । तत्र यदरण्यं तद्वासिनः ।

(४५) संप्राप्ताः उपस्थिताः ।

(४६) प्रमाणम् इतिकर्त्तव्यतायाः हेतुरित्यर्थः । यत् कर्त्तव्यं तत् करोतु इति भावः ।

(४७) उपाध्यायः वृत्तिभोगी शिक्षागुरुविशेषः तथा च मनुः । एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते इति । हारपण्डित इति यस्य प्रसिद्धिः ।

(४८) श्रौतेन श्रुतिर्वेदः तद्विहितेन विधिना कल्पेन नियमेन इत्यर्थः । सत्कृत्य सम्मान्य ।

(४९) प्रतिपालयामि प्रतीक्षे ।

(५०) अग्निशरणमार्गं होमगृहस्य पन्थानम् । आदेशय दर्शय ।

प्रतीहारी । इदो इदो एदु देवो । [परिक्रम्य] । एसो अहिणवसम्मज्जणरमणीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो, (५१) ता आरोहदु देवो (क) ।

राजा । [आरुह्य परिजनांसावलम्बी तिष्ठन्] । वेत्रवति ! किम् उद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः ?

किन्तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितम् ?
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ? ।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधाम् ?
इत्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ (५२)

(क) इत इत एतु देवः । एषोऽभिनवसम्मार्जनरमणीयः सन्निहितहोमधेनुः अग्निशरणालिन्दः तदारोहतु देवः ।

(५१) अभिनवेति अभिनवेन नूतनेन सम्मार्जनेन रमणीयः मनोज्ञः । सन्निहितेति सन्निहिता समीपवर्त्तिनी होमधेनुः यस्य तथोक्तः । अग्निशरणेति अग्निशरणस्य होमगृहस्य अलिन्दः द्वारदेशस्थचतुरस्रप्रदेशः ।

(५२) किमिति । विघ्नैः यज्ञादिव्याघातकैः राक्षसादिभिः उपोढं गृहीतं तपो यैः तथोक्तानां तपस्विनामित्यर्थः व्रतिनां नियमवतां तपः यागादिकर्म दूषित व्याहतम् । किं तावत् ? उत अथवा केनचित् दुराचारेण इति शेषः धर्मारण्यचरेषु तपोवनवासिषु प्राणिषु जीवेषु असत् मन्दं यथा तथा चेष्टितम् आचरितम् ? आहोस्वित किंवा मम अपरिचितैः अज्ञातैः क्षुद्रैरिति भावः वीरुधां लतानां प्रसवः फलं पुष्पञ्च इत्यर्थः विष्टम्भितः आक्रान्तः अपहृत इति यावत् इति इत्थम् आरूढः उद्भूतः बहुः विविधः प्रतर्कः यस्मिन् तथाभूतं मे मम मनः अपरिच्छेदेन अनिर्द्धारणेन आकुलम् उत्कण्ठित भवतीति शेषः । शार्दूलविक्रीड़ित वृत्तम् ।

प्रती। देवस्स भुअदण्डणिव्वुदे (५३) अस्समपदे कुदो एवं किन्तु सुचरिदाहिणन्दिणो (५४) इसीओ देवं सभाज-इदुं (५५) आअदे त्ति तक्केमि (क)।

ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहितकञ्चुकिनौ।

कञ्चु। इत इतो भवन्तः।

शार्ङ्गरवः। सखे शारद्वत!

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव॥ (५६)

(क) देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवं, किन्तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुम् आगता इति तर्कयामि।

---

(५३) भुजदण्डेति। भुजौ दण्डाविव ताभ्यां निर्वृते निर्विघ्ने इत्यर्थः।

(५४) सुचरितेति। सुचरितं सत्कार्यम् अभिनन्दन्तीति तथोक्ताः।

(५५) सभाजयितुं सम्मानयितुम्।

(५६) महाभाग इति। असौ महाभागः महानुभावः नरपतिः कामं सम्यक् अभिन्ना अव्याहता स्थितिः मर्यादा सदाचारपद्धतिरित्यर्थः येन तथाभूतः शिष्टाचारपरिपालकः। तथाच वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां मध्ये कश्चित् अपकृष्टोऽपि नीचोऽपि अपथं कुमार्गं न भजते न आश्रयति। तथापि एवं शिष्टाचारपद्धत्वामपि इत्यर्थः इदं जनाकीर्णं राजसदनमिति शेषः। शश्वत् सततं परिचितम् अभ्यस्त विविक्तं विजनं येन तादृशेन मनसा सततनिर्जनस्थानप्रियेण इत्यर्थः। मनसा हुतवहपरीतम् अग्निव्याप्तं गृहमिव मन्ये सम्भावयामि। उत्प्रेक्षालङ्कारः शिखरिणीवृत्तं रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात्।

शारद्वतः । शार्ङ्गरव ! स्थाने (५७) खलु पुरप्रवेशात्तव ईदृशः संवेगः (५८) । अहन्तु

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ (५९)

पुरोधाः । अतएव भवद्विधा महान्तः । (६०)

शकुन्तला । [दुर्निमित्तम् (६१) अभिनीय] । अम्मो ! किं मे वामेदरं (६२) णअणं विप्फुरदि (क) । (६३)

गौतमी । जादे ! पडिहदं (६४) अमङ्गलं, सुहाइं दे होन्तु (ख) । [इति परिक्रामन्ति] ।

(क) अहो ! किं मे वामेतरत् नयनं विस्फुरति ?
(ख) जाते ! प्रतिहतममङ्गलं शुभानि ते भवन्तु ।

(५७) स्थाने युक्तम् ।

(५८) संवेगः सम्भ्रमः ।

(५९) अभ्यक्तमिति । इह राजधान्यां सुखसङ्गिनं विषयसम्भोगसुखरतं जनं स्नातः जनः अभ्यक्तं सर्वाङ्गेषु तैलाक्तं जनमिव अभ्यङ्गस्नानयुक्तश्च । मूर्द्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् । स्रोतोभिस्तर्पयेत् बाह्य अभ्यङ्गः स उदाहृत इति । शुचिः पवित्रो जनः अशुचिमिव अपवित्रं जनमिव, प्रबुद्धः जागरितो जनः सुप्तं निद्रितं जनमिव तथा स्वैरगतिः स्वेच्छाचारी जनः बद्धं कारावासिनं जनमिव अवैमि मन्ये । मालोपमालङ्कारः तदुक्तं दर्पणे । मालोपमा यदेकस्य उपमानं बहु दृश्यते इति । आर्य्याजातिः ।

(६०) महान्तः उदाराः ।

(६१) दुर्निमित्तं दुर्लक्षणम् ।

(६२) वामेतरं दक्षिणम् ।

(६३) विस्फुरति स्पन्दते । वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिण इति सामुद्रिकवचनात् स्त्रीणां दक्षिणाङ्गस्फुरणममङ्गलनिदानमिति भावः ।

(६४) प्रतिहतं विध्वंसितं भवतु इति शेषः ।

पुरो । [राजानं निर्दिश्य] । भो भोः तपस्विनः! असौ अत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति (६५) वः, पश्यतैनम् ।

शार्ङ्ग । भो महात्मन्! काममेतत् अभिनन्दनीयम्(६६) तथापि वयम् अत्र मध्यस्थाः (८७) । कुतः

भवन्ति नम्रास्तरवः फलोद्गमैः,
नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः,
स्वभाव एवैष परोपकारिणाम् ॥ (६८)

(६५) अत्रभवान् पूज्यः । वर्णाश्रमाणां वर्णाः ब्राह्मणादयः आश्रमा ब्रह्मचारिगार्हस्थ्यवानप्रस्थसन्न्यासिनः तेषां रक्षिता पालयिता । प्रागेव पूर्वमेव भवताम् आगमनादिति शेषः मुक्तम् आसनं येन तथोक्तः आसनं परित्यजन् इत्यर्थः । प्रतिपालयति अपेक्षते ।

(६६) एतत् आसनत्यागपूर्वकम् अस्मदपेक्षणमिति भावः । अभिनन्दनीयं प्रशंसनीयम् ।

(६७) अत्र विषये मध्यस्थाः उदासीनाः अप्रशंसिन इत्यर्थः नैसर्गिकेषु कार्य्येषु का प्रशंसेति भावः ।

(६८) भवन्तीति । तरवः वृक्षाः फलानाम् उद्गमैः उद्भवैः नम्राः विनताः भवन्ति भरेण इति भावः घनाः मेघाः नवाम्बुभिः नवजलैः भृता इति शेषः दूरात् विलम्बन्ते इति दूरविलम्बिनः भवन्तीति शेषः । तथा सन्तः पुरुषाः समृद्धिभिः सम्पद्भिः अनुद्धताः अगर्विण इत्यर्थः भवन्तीति शेषः । एष परोपकारिणां स्वभाव एव । फलवन्तो वृक्षाः जलपूर्णा मेघा ऐश्वर्य्यशालिनः साधवः परोपकारिणो नम्राश्च भवन्तीत्येषां प्रकृतिरेव इति निष्कर्षः । अत्र सामान्येन विशेषसमर्थनरूपेण अर्थान्तरन्यासेन वाक्यत्रयगतो दृष्टान्तालङ्कारः सङ्कीर्य्यते । वंशस्थविलं वृत्तम् ।

प्रती । देव ! पसस्समुहा इसीश्रो दीसन्ति (क) ।

राजा । [शकुन्तलां निर्वर्ण्य] । अये ! अत्र

केयमवगुण्ठनवती, नातिपरिस्फुटशरीरलावण्या

मध्ये तपोधनानां, किसलयमिव पाण्डुपत्राणाम् ॥ (६९)

प्रती । भट्टा ! कुदुहलगब्भो पडिहदो ण मे तक्को पसरदि, दंसणीश्रा उण से आकिदी लक्खीअदि (ख)। (७०)

राजा। भवतु अनिर्वर्ण्यं (७१) खलु परकलत्रम्। (७२)

शकु । [उरसि हस्तं दत्त्वा स्वगतम्] । हिअअ ! किं

(क) देव ! प्रसन्नमुखा ऋषयो दृश्यन्ते ।

(ख) भर्त्तः ! कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति, दर्शनीया पुनरस्या आकृतिः लक्ष्यते ।

(६९) केयमिति । पाण्डुपत्राणां पक्वपलाशानां किसलयमिव नवपल्लवमिव तपोधनानां मध्ये अवगुण्ठनवती आच्छादितशरीरा अतएव न अतिशयेन परिस्फुटं शरीरस्य लावण्यं कान्तिविशेषो यस्याः तथाभूता। लावण्यलक्षणमुक्तम् । मुक्ताफलेषु छायायाः तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इति। इयं का ? उपमालङ्कारः। आर्य्याजातिः।

(७०) भर्त्तः ! प्रभो । कुतूहलम् औत्सुक्यं गर्भे मध्ये यस्य तथाभूतः मे मम तर्कः तपोधनानामागमनविषयिणी पृच्छेति भावः न प्रतिहतः न गतः, अतएव प्रसरति स्फुरति, पुनः किन्तु अपरश्चेत्यर्थः अस्याः कामिन्याः आकृतिः दर्शनीया सुदर्शनेत्यर्थः लक्ष्यते ज्ञायते इत्यर्थः ।

(७१) अनिर्वर्ण्यम् अनवलोकनीयम् ।

(७२) परकलत्रं परनारी ।

एव्वं वेवसि (७३) ? अज्जउत्तस्स तादिसभावानुबन्धं (७४) सुमरिअ धीरत्तणं दाव अवलम्बस्स (क)।

पुरो। [पुरोगत्वा]। स्वस्ति देवाय, देव! एते खलु विधिवत् अर्चिताः तपस्विनः, कश्चिदेतेषु उपाध्यायसन्देशः (७५) अस्ति, तं देवः श्रोतुमर्हति।

राजा। अवहितोऽस्मि।

शिष्यौ। [हस्तमुद्यम्य] भो राजन्! विजयतां भवान्।

राजा। सर्वान् अभिवादये वः।

शिष्यौ। स्वस्ति देवाय।

राजा। अपि निर्विघ्नं तपः?

शिष्यौ।

कुतो धर्मक्रियाविघ्नः? सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति?॥ (७६)

(क) हृदय! किमेवं वेपसे? आर्य्यपुत्रस्य तादृशभावानुबन्धं स्मृत्वा धीरत्वं तावत् अवलम्बस्व।

---

(७३) वेपसे कम्पसे।

(७४) तादृशभावानुबन्धं तथाविधानुरागपरम्पराम्।

(७५) उपाध्यायसन्देशः उपाध्यायस्य आचार्य्यस्य सन्देशः वाचिकम्।

(७६) कुत इति। त्वयि रक्षितरि शासितरि सतां साधूनां धर्मक्रियाया धर्मानुष्ठानस्य विघ्नः व्याघातः कुतः? घर्मांशौ सूर्य्ये तपति सति तमः अन्धकारः कथम् आविर्भविष्यति? प्रसरिष्यति। दृष्टान्तालङ्कारः। पथ्यावक्त्रं वृत्तम्।

राजा। [आत्मगतम्]। सर्वथा अर्थवान् (७७) खलु मे राजशब्दः। [प्रकाशम्]। तत्रभवान् कुशली काश्यपः?

शार्ङ्ग। राजन्! स्वाधीनकुशलाः सिद्धिमन्तः (७८)। स भवन्तम् अनामयप्रश्नपूर्वकम् (७९) इदमाह।

राजा। किम् आज्ञापयति भगवान्?

शार्ङ्ग। यन्मिथः समयात् (८०) इमां मदीयां दुहितरं भवान् उपयेमे (८१) तन्मया प्रीतिमता युवयोरनुज्ञातम् (८२)। कुतः

त्वमर्हतामग्रसरः स्मृतोऽसि नः,
शकुन्तला मूर्त्तिमतीव सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं,
चिरस्य वाच्यं न गतः प्रजापतिः॥ (८३)

---

(७७) अर्थवान् अन्वर्थः राजते लोकान् रञ्जयतीत्यर्थयोगादिति भावः।

(७८) स्वाधीनेति सिद्धिमन्तः सिद्धार्थाः पुरुषाः स्वस्य अधीनम् आयत्तं कुशलं मङ्गलं तेषां तथाभूताः। महर्षीणां सिद्धत्वात् कुशलं स्वायत्तमेव न परसाहाय्यम् अपेक्षते इति भावः।

(७९) अनामयप्रश्नपूर्वकम् आरोग्यप्रश्नपुरःसरम्। तथा च मनुः। ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयमिति।

(८०) मिथः अन्योन्यं समयात् प्रतिज्ञामारभ्य इत्यर्थः यवर्थे पञ्चमी गान्धर्वेण विधिनेत्यर्थः गान्धर्वः समयान्मिथ इति शास्त्रात्।

(८१) उपयेमे परिणीतवान्।

(८२) अनुज्ञातम् अनुमोदितम्।

(८३) त्वमिति। त्वम् अर्हतां योग्यानां पूज्यानामिति यावत् अग्रसरः श्रेष्ठः नः अस्माकं स्मृतः ज्ञातः असि त्वां पूजनीयाग्रगण्यं जानीम इति भावः।

तत् इदानीम् आपन्नसत्त्वेयं गृह्यतां सहधर्माचरणाय इति। (८४)

गौत। भद्दमुह! किम्पि वत्तुकामह्मि, ण मे वअणावसरो (८५) अत्थि (क)।

राजा। आर्य्ये! कथ्यताम्।

गौत।

णावेक्खिदो गुरुअणो इमिए, तुएवि ण पुच्छिदो बन्धू।
एक्कक्कस्सअ चरिए किं भणदु एक्क एकस्सिं॥ (ख)। (८६)

शकु। [आत्मगतम्]। किण्णु क्खु, अज्जउत्तो भणिस्सदि? (ग)

---

(क) भद्रमुख! किमपि वक्तुकामास्मि न मे वचनावसरोऽस्ति।

(ख) नापेक्षितो गुरुजनोऽनया, त्वयापि न पृष्टो बन्धुः।
एकैकस्य च चरिते किं भणतु एक एकस्मिन्॥

(ग) किं नु खलु आर्य्यपुत्रो भणिष्यति?

---

शकुन्तला मद्दुहिता मूर्त्तिमती देहधारिणी सत्क्रिया सत्कारः पूजेति यावत् सतश्च पूजा पूज्यमेवार्हतीति भावः। तस्मात् प्रजापतिः विधाता तुल्यगुणम् अन्योन्यानुरूपगुणशालिनं वधूश्च वरश्च इयोः समाहारः वधूवरं मिथुनमित्यर्थः समानयन् संयोजयन् चिरस्य वाच्यम् अपवादम् अयोग्ययोजनजनितमिति भावः न गतः न प्राप्तः। उत्प्रेक्षाकाव्यलिङ्गयोः संसृष्टिः। वंशस्थविलं वृत्तम्।

(८४) आपन्नसत्त्वा गर्भवती। सहधर्माचरणाय अनया सह धर्मं गार्हस्थ्योचितं कर्त्तव्यकलापम् आचरितुमिति यावत् सस्त्रीको धर्ममाचरेदिति शास्त्रात्।

(८५) वचनावसरः वाक्प्रसरस्य न स्थलमिदमिति भावः।

(८६) नापेक्षित इति। अनया शकुन्तलया गुरुजनः अस्मदादिरिति भावः न अपेक्षितः न गणितः त्वयापि बन्धुः स्वजनः अस्या इति शेषः न पृष्टः अस्याः

राजा । [साशङ्कमाकर्ण्य]। अये ! किम् इदम् उपन्यस्तम् ? । (८७)

शकु । [आत्मगतम्]। हद्धी, हद्धी ! सावलेवो (८८) से वअणाक्खेवो (क)। (८९)

शार्ङ्ग । किं नाम किमिदम् उपन्यस्तमिति, ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः । (९०)

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ॥ (९१)

---

(क) हा धिक्, हा धिक् ! सावलेपोऽस्य वचनाक्षेपः ।

---

याचितवृत्तार्थमिति भावः। एकैकस्य अन्योन्यस्य तृतीयनिरपेक्षस्येति भावः चरिते अनुष्ठिते कार्य्ये इति शेषः अत्यनुरागवशंवदतयेति भावः एकः अपर इत्यर्थः एकस्मिन् उभयोरन्यतरस्मिन्नित्यर्थः विषये किं भणतु ब्रवीतु न किमपि वक्तुं युज्यते इति भावः।

(८७) उपन्यस्तम उक्तम्। अथवा इदं भवतां वचनं किम् उपन्यस्तम् उपन्यास-रूपम् उपकथा कथ्यते किम् ? इति केचित्।

(८८) सावलेपः साहङ्कारः।

(८९) वचनाक्षेपः वाग्विन्यासः। वाक्यस्य स्वामभिमतत्वेन काकुप्रतीतेः सावलेपतयोक्तिः।

(९०) सुतरां सम्यक्। लोकवृत्तान्तनिष्णाताः लोकाचारविचक्षणाः। सत्यं परिणीता मया, राज्ञा बहुभार्य्यत्वात् अत्र कथं भवद्भिरानीतेत्याशङ्क्य शार्ङ्गरवस्य उक्तिरियम्।

(९१) सतीमिति। जनः भर्तृमतीं सभर्तृकां नारीं ज्ञातिकुलं पितृकुलम् एकः अन्यश्च इत्यर्थः संश्रयो यस्याः तथाविधां सतीमपि साध्वीमपि अन्यथा

राजा। किम् अत्रभवती मया परिणीतपूर्वा ?

शकु। [सविषादमात्मगतम्]। हिअअ ! संपदं संवुत्ता (९२) दे आसङ्का (क)। (९३)

शार्ङ्ग। किं कृतकार्य्यद्वेषात् धर्मं प्रति विमुखतोचिता (९४) राज्ञः ?

राजा। कुतोऽयम् असत्कल्पनाप्रसङ्गः ? (९५)

शार्ङ्ग। [सक्रोधम्]। मूर्च्छन्ति अमी विकाराः (९६) प्रायेण ऐश्वर्य्यमत्तानाम्।

राजा। विशेषेण अधिक्षिप्तोऽस्मि (९७)।

गौत। [शकुन्तलां प्रति]। जादे ! मुहुत्तअं मा लज्ज,

---

(क) हृदय ! साम्प्रतं संवृत्ता ते आशङ्का।

असतीत्वेन इति भावः विशङ्कते विशेषेण आशङ्कते। अतः कारणात् स्वबन्धुभिः प्रमदा नारी प्रिया वा अप्रिया भर्त्तुरिति शेषः। परिणेतुः पत्युः समीपे इष्यते रक्षणायेति शेषः। वंशस्थविलं वृत्तम्।

(९२) संवृत्ता उपस्थिता।

(९३) आशङ्का उद्वेगः।

(९४) कृतेति। कृतस्य स्वानुष्ठितस्य कार्य्यस्य द्वेषात् अनङ्गीकारादिति यावत्। विमुखता वैमुख्यम्।

(९५) असत्कल्पनाप्रसङ्गः असतः असत्यस्य इत्यर्थः कल्पनायाः स्वयमुद्भावनस्य प्रसङ्गः प्रसक्तिः उद्यम इत्यर्थः।

(९६) मूर्च्छन्ति वर्द्धन्ते। विकाराः विरुद्धभावाः।

(९७) अधिक्षिप्तः तिरस्कृतः।

अवणइस्सं दाव दे अवगुण्ठणं, तदो भट्टा तुमं अहिजाणि-स्सदि (क) । [इति तथा करोति] ।

राजा । [शकुन्तलां निर्वर्ण्य स्वगतम्] ।

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यध्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्॥(९८)

[इति विचारयन् स्थितः] ।

प्रती । [स्वगतम्] । अम्मो ! धम्मावेक्खिदा भट्टिणो (९९) ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अण्णो विआरेदि (ख) । (१००)

---

(क) जाते ! मुहूर्त्तं मा लज्जस्व, अपनेष्यामि तावत्तेऽवगुण्ठनं, ततो भर्त्ता त्वामभिज्ञास्यति ।

(ख) अहो ! धर्मापेक्षिता भर्त्तुः, ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति ।

---

(९८) इदमिति । इदम् अक्लिष्टा अम्लाना कान्तिः यस्य तथाभूतम् एवं सहसेत्यर्थः अतर्कितमिवि यावत् उपनतम् उपस्थितं रूपं प्रथमं प्राक् परिगृहीतं परिणीतं स्यात् न वा इति अध्यवस्यन् वितर्कयन् सन्दिहान इत्यर्थः सन् निशान्ते प्रातः अन्तर्गतः तुषारः हिमं यस्य तथाभुतं कुन्दं कुन्दपुष्पं भ्रमर इव तुषाराच्छन्न-त्वात् मधुन इति भावः सपदि सहसा भोक्तुं सेवितुं न खलु नैव शक्नोमि, मोक्तुं परित्यक्तुमपि न शक्नोमि । उपमालङ्कारः । मालिनीवृत्तम् ।

(९९) धर्मापेक्षिता धर्मम् अपेक्षन्ते अनुसरन्ति तस्य भावः धर्मापेक्षिता धर्म-निष्ठा भर्त्तुः स्वामिनः ।

(१००) विचारयति संशेते न कोऽपि इत्यर्थः ।

शार्ङ्ग । भो राजन् ! किमिति जोषमास्यते ? ( १०१ )

राजा । भोः तपस्विनः ! चिन्तयन्नपि न खलु स्वीकरणम् अत्रभवत्याः स्मरामि, तत्कथम् इमाम् अभिव्यक्तसत्त्वलक्षणामात्मानम् अक्षत्रियं मन्यमानः प्रतिपत्स्ये ?। (१०२)

शकु । [स्वगतम्] । हद्दी, हद्दी ! कधं परिणए ज्जेव सन्देहो, भग्गा दाणिं दूरारोहिणी आसालदा(क) । (१०४)

(क) हा धिक् हा धिक् ! कथं परिणय एव सन्देहः, भग्नेदानीं दूरारोहिणी आशालता ।

(१०१) जोषं तूष्णीम् । आस्यते स्थीयते ।

(१०२) स्वीकरणं पाणिग्रहणम् ।

(१०३) अभिव्यक्तसत्त्वलक्षणाम् अभिव्यक्तं प्रस्फुटं सत्त्वलक्षणं गर्भचिह्नं यस्याः तथोक्तां गर्भलक्षणेन अस्याः पुरुषान्तरसहयोगस्य निश्चितत्वात् परनारीत्वे सिद्धे कथमस्याः परिग्रहः सम्भवेदिति भावः । अक्षत्रियं नाहं क्षत्रियः राजा इति अक्षत्रियः तम् आत्मानं राजवंशबहिर्भूतमित्यर्थः राज्ञः परनारीस्पर्शस्य अतीव दूषितत्वादिति भावः । अक्षेत्रिणमिति पाठे क्षेत्रं नारी अस्यास्तीति क्षेत्री न क्षेत्री अक्षेत्री तं क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमानिति शास्त्रात् । अहं न क्षेत्री न अस्याः पतिरिति यावत् तथोक्तम् आत्मानं मन्यमानः जानन् परिणीतायामपि नियोगविधिना अन्येन उत्पादितः पुत्रः क्षेत्रजो भवति तदभिप्रायेण अपि नेयं ग्राह्येति भावः । प्रतिपत्स्ये ग्रहीष्यामि ।

(१०४) दूरारोहिणी दूरम् आरोहतीति तथोक्ता अहं राजमहिषी भूत्वा एवमेवं प्रकारेण सुखमनुभविष्यामि इत्येवं रूपेति भावः आशा लता इव सा भग्ना विच्छिन्ना ।

शार्ङ्ग । मा तावत् ।

कृतावमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ (१०५)

शार । शार्ङ्गरव ! विरम त्वम् इदानीं, शकुन्तले ! वक्तव्यमुक्तम् अस्माभिः, सोऽयम् अत्रभवान् एवमाह, दीयताम् अस्मै प्रत्ययप्रतिवचनम् । (१०६)

शकु । [स्वगतम्] । इमं अवत्थन्तरं गदे तादिसे अणुराए किंवा सुमराविदेण, अधवा अत्ता दाणिं मे सोधणीओ (१०७) होदु त्ति किम्पि वदिस्सं । [प्रकाशम्] । अज्जउत्त ! [इत्यर्द्धोक्ते] अधवा संसइदो दाणिं एसो समुदाचारो(१०८) । पोरव ! जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहि-

(१०५) कृतावमर्षामिति । कृतः अवमर्षः धर्षणं बलात्कार इति यावत् यस्याः तादृशीं सुतां कन्याम् अनुमन्यमानः अनुमोदमानः मुनिः त्वया विमान्यः अवज्ञेयः नाम सम्भावनायाम् । मुष्टम् अपहृतं स्वम् अर्थं प्रतिग्राहयता प्रत्यर्पयता येन दस्युरिव मलिम्लुच इव पात्रीकृतः असि । पितरमवमत्य तदनुमतिमन्तरेण तत्कन्या त्वया बलात् गृहीता स तु महात्मा आत्मनः अवमाननामगणयित्वा त्वय्येव दस्युभूताय पुनः सा कन्या दानाय प्रेषिता तथापि तदवमाननमित्यतीवौद्धत्यं श्यते इति भावः । उपमालङ्कारः । उपजातिवृत्तम् ।

(१०६) प्रत्ययप्रतिवचन विश्वासजनकमुत्तरम् ।

(१०७) शोधनीयः शुद्धिं नयनीयः निर्दोषः करणीय इत्यर्थः ।

(१०८) समुदाचारः आर्य्यपुत्र इति सम्बोधनपदम् वा सम्बोधनरूप आचारः ।

अग्गं (२०९) इमं जणं तधा समअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं ? (क)। (११०)

राजा। [कर्णौ। पिधाय]। शान्तं शान्तम्। (१११)

व्यपदेशम् आविलयितुं समीहसे माञ्च नाम पातयितुम्।
कूलङ्कषेव सिन्धुः प्रसन्नम् ओघं तटतरुञ्च॥ (११२)

शकु। भोदु, जइ परमत्थदो परपरिग्गहसङ्किणा(११३)

(क) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन, अथवा आत्मा इदानीं मे शोधनीयो भवतु इति किञ्चिद्वदिष्यामि। आर्य्यपुत्र! अथवा संशयित इदानीमेष समुदाचारः। पौरव! युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्वकं सम्भाव्य साम्प्रतमीदृशैः अक्षरैः प्रत्याख्यातुम्।

---

(१०९) सद्भावोत्तानहृदयं सद्भावेन प्रणयातिशयेन उत्तानं स्फीतं प्रफुल्लमित्यर्थः हृदयं यस्य तादृशम्।

(११०) तथा तेन प्रकारेण यथा न कदाचित् स्खलनं भवति तथेत्यर्थः समयपूर्वकं प्रतिज्ञापूर्वकम्। सम्भाव्य समादृत्य। ईदृशैः अवमानमासूचकैः अक्षरैः वर्णैः। प्रत्याख्यातुं निराकर्त्तुं परित्यक्तुमिति यावत्।

(१११) शान्तं शान्तं निवर्त्त्यतां निवर्त्त्यताम् एतादृशं वचनं मा वदेति भावः।

(११२) व्यपदेशमिति। कूलं तटं कषति शातनं करोति भिनत्तीति यावत् तथोक्ता सिन्धुः नदी देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः। प्रसन्नं स्वच्छं निर्मलमित्यर्थः ओघं प्रवाहं तटतरुञ्च एव व्यपदिश्यते कीर्त्त्यते अनेनेति व्यपदेशः कुलं तत् आविलयितुं कलुषीकर्त्तुं माञ्च पातयितुं समीहसे सम्यक् चेष्टसे। उपमालङ्कारः। आर्य्याजातिः।

(११३) परमार्थतः यथार्थतः। परपरिग्रहशङ्किना परस्त्रियं सन्दिहानेन।

सुए एव्वं पउत्तं (११४) ता अहिसाणेण (११५) केणवि तुह आसङ्कं अवणइस्सं (क)। (११६)

राजा । प्रथमः कल्पः। (११७)

शकु । [मुद्रास्थानं परामृश्य]। हद्दी, हद्दी (११८) अङ्गुलीअअसुसा मे अङ्गुली! (ख)। [इति सविषादं गौतमीमुखमीक्षते]।

गौत । णूणं दे सक्कावदारे सचीतीत्थोदअं वन्दमाणाए (११९) पब्भट्टं अङ्गुलीअअं (ग)।

---

(क) भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वया एवं प्रवृत्तम्, तदभिज्ञानेन केनापि तव आशङ्कामपनेष्यामि।

(ख) हा धिक्, हा धिक्! अङ्गुरीयकशून्या मे अङ्गुली।

(ग) नूनं ते शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुरीयकम्।

---

(११४) प्रवृत्तं कर्त्तुमारब्धमित्यर्थः।

(११५) अभिज्ञानेन अभिज्ञायते सम्यक् ज्ञायते अनेनेति अभिज्ञानं सम्यक् परिचायकं चिह्नं तेन।

(११६) आशङ्कां सन्देहम्। अपनेष्यामि निराकरिष्यामि।

(११७) प्रथमः मुख्यः कल्पः विधिः उपाय इति यावत।

(११८) परामृश्य स्पृष्ट्वा। हा धिक् हा धिक् हा खेदे धिक् निन्दायां धिङ्निर्भर्त्सन निन्दयोरित्यमरः। प्रमादिनीं मां निन्दामीत्यर्थः।

(११९) शक्रावतारे शक्रस्य इन्द्रस्य अवतारः अवतरणं यस्मिन् तथोक्तः तदाख्यया प्रसिद्धः कश्चित् गङ्गावतरणघट्टः। तत्र शच्या इन्द्राण्या कृतम् आवाहितं तीर्थोदकं पुरा शक्रेण सहागतया तत्पत्न्या तत्र गङ्गावतरणदेशे सर्वाणि तीर्थानि "गङ्गे च यमुने चैव गोदावरि सरस्वती"। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुर्विति मन्त्रेण आवाह्य स्नातवतीति तस्य शचीतीर्थत्वप्रसिद्धिरित्यनुसन्धेया। वन्दमानाया अर्चयन्त्या प्रणमन्त्या वा।

राजा । [सस्मितम्] । इदं तावत् प्रत्युत्पन्नमतित्वं (१२०) स्त्रीणाम् ।

शकु । एत्थ (१२१) दाव विहिणा (१२२) दस्सिदं पहुत्तणं (१२३) अवरं दे कधइस्सं (क) ।

राजा । श्रोतव्यम् इदानीम् संवृत्तम् ।

शकु । णं एक्कदिअहे वेदसलदामण्डवे णलिणीवत्तभाअणगदं उदअं तुह हत्थे सण्णिहिदं आसी (ख) ।

राजा । शृणुमस्तावत् ।

शकु । तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ (१२४) उवट्ठिदो, तदो तुए अअं दाव पढमं पिअदुत्ति अणुकम्पिणा उवच्छन्दिदो (१२५) उदएण, ण

---

(क) अत्र तावद्विधिना दर्शितं प्रभुत्वम्, अपरं ते कथयिष्यामि ।

(ख) ननु एकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितम् आसीत् ।

---

(१२०) प्रत्युत्पन्नमतित्वम् उपस्थितबुद्धित्वं प्रतिभोज्ज्वलत्वमिति यावत् ।

(१२१) अत्र अङ्गुरीयदर्शने इत्यर्थः ।

(१२२) विधिना दैवेन ।

(१२३) प्रभुत्वं प्रभावः मद्वैमुख्ये सामर्थ्यमिति भावः ।

(१२४) पुत्रकृतकः पुत्रत्वेन परिगृहीतः । दीर्घापाङ्गः नाम दीर्घौ आयतौ अपाङ्गौ नेत्रप्रान्तौ यस्य तथोक्तः तदाख्यया प्रथित इत्यर्थः । मृगपोतकः हरिणशावकः ।

(१२५) अनुकम्पिना दयमानेन । उपच्छन्दितः अभ्यर्थितः सादरं पानार्थम् अनुरुद्ध इत्यर्थः ।

उण सो अपरिचिदस्स दे हत्थादो उदअं उवगदो पादुं, पच्छा तस्सिं ज्जेव उदए मए गहिदे किदो तेण पणओ (१२६) एत्थन्तरे विहसिअ तुए भणिदं सव्वो सगन्धे वीसससदि, जदो दुवेवि तुम्हे आरण्णआओ त्ति (क)।

राजा । आभिस्तावत् आत्मकार्य्यप्रवर्त्तिनीभिः (१२७) मधुराभिः अनृतवाग्भिः आकृष्यन्ते विषयिणः । (१२८)

गौत । महाभाअ! णारिहसि एव्वं मन्तिदुं, तवोवणसंवड्ढिदो क्खु अअं जणो अणभिण्णो कइदवस्स (ख)। (१२९)

राजा । अयि तापसवृद्धे !

स्त्रीणामशिक्षितपटुत्वममानुषीणां
संदृश्यते किमुत याः परिबोधवत्यः ।

(क) तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः, ततः त्वया अयं तावत् प्रथमं पिबतु इति अनुकम्पिना उपच्छन्दित उदकेन, न पुनः सोऽपरिचितस्य ते हस्तात् उदकम् उपगतः पातुं पश्चात् तस्मिन्नेव उदके मया गृहीते कृतः तेन प्रणयः, अत्रान्तरे विहस्य त्वया भणितं, सर्वः स्वगन्धे विश्वसिति, यतो द्वे अपि युवाम् आरण्यके इति ।

(ख) महाभाग ! न अर्हसि एवं मन्त्रयितुं, तपोवनसंवर्द्धितः खलु अयं जनोऽनभिज्ञः कैतवस्य ।

(१२६) प्रणयः पानार्थमाग्रह इत्यर्थः ।

(१२७) आत्मकार्य्येति स्वकार्य्यसाधनीभिरित्यर्थः ।

(१२८) आकृष्यन्ते वाध्यन्ते वशीक्रियन्ते । विषयिणः इन्द्रियसुखपराः कामिनः इत्यर्थः ।

(१२९) अनभिज्ञः अज्ञाता । कैतवस्य कपटव्यवहारस्य ।

प्रागन्तरिक्षगमनात् स्वमपत्यजातम्
अन्यैर्द्विजैः परभृताः किल पोषयन्ति ॥ (१२०)

शकु। [सरोषम्] अणज्ज! अत्तणो हिअआणुमाणेण किल सव्वं (१२१) पेक्खसि, कोणाम अण्णो धम्मकञ्चुअव्ववदेसिणो तिणच्छण्णकूवोवमस्स (१२२) तुह अणुआरी(१२३) भविस्सदि? (क)।

---

(क) अनार्य्य! आत्मनो हृदयानुमानेन किल सर्वं प्रेक्षसे, को नामान्यो धर्मकञ्चुकव्यपदेशिनः तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यति?

---

(१२०) स्त्रीणामिति। अमानुषीणां मानवजातिभिन्नानां पशुपक्षिणीनामपि इति भावः स्त्रीणाम् अशिक्षितपटुत्वं शिक्षां विनापि चातुर्य्यं संदृश्यते सम्यक् लक्ष्यते याः प्रतिबोधवत्यः सम्यक् ज्ञानवत्यः मानव्य इत्यर्थः ताः किमुत? किं वक्तव्या? इत्यर्थः का कथा तासामिति भावः अर्थापत्त्यलङ्कारः। तदुक्तं दर्पणे। दण्डा-पूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति। उक्तमर्थं दृष्टान्तेन द्रढयति प्रागिति परभृताः कोकिलाः अन्तरीक्षगमनात् उड्डयनात् प्राक् उड्डयनशक्तेः पूर्वमिति यावत् स्वम् अपत्यजातं शावकवृन्दम् अन्यैर्द्विजैः काकैरित्यर्थः पोषयन्ति किल पालयन्त्येव। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। तदेवं अर्थापत्त्यर्था-न्तरन्यासयोः संसृष्टिः। वसन्ततिलकं वृत्तम्।

(१२१) अनार्य्य अभद्र! आत्मनः स्वस्य हृदयानुमानेन हृदयं यथा अभद्रं तथा अन्यस्यापीति अनुमानेन सर्वं जनम् अभद्रमिति शेषः।

(१२२) धर्मकञ्चुकव्यपदेशिनः धर्मः कञ्चुकः बाह्याङ्गावरणविशेष इव न तु आन्तरो धर्म इति भावः तेन व्यपदिशति आत्मानं धार्मिकं ख्यापयतीति तथोक्तस्य। अतएव तृणैः छन्नः आच्छादितमुखः यः कूपः स एव उपमा उपमानं यस्य तथाभूतस्य।

(१२३) अनुकारी सदृशकर्मा।

राजा । [आत्मगतम्] । वनवासात् अविभ्रमः (१३४) पुनः अत्रभवत्याः कोपो लक्ष्यते । तथाहि

न तिर्य्यगवलोकितं, भवति चक्षुरालोहितं,
वचोऽपि परुषाक्षरं, नच पदेषु संगच्छते ।
हिमार्त्त इव वेपते सकल एव बिम्बाधरः,
प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥ (१३५)

अपिच । सन्दिग्धबुद्धिं मामधिकृत्य (१३६) अकैतव इवास्याः कोपः सम्भाव्यते । तथाहि अनया

मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ (१३७)

---

(१३४) अविभ्रमः अविलासः ।

(१३५) नेति । तिर्य्यक् कुटिलम् अवलोकितं दृष्टिः न, किन्तु चक्षुः आलोहितं सम्यक् रक्तं भवति । वचः वाणी परुषाणि कर्कशानि क्रोधव्यञ्जकानि अक्षराणि यत्र तथाभूतम् अपि किन्तु पदेषु स्थानेषु वचनप्रयोगविषयेषु इति यावत् न सङ्गच्छते न सङ्गतं भवतीत्यर्थः अप्रमाणिकत्वादिति भावः । संसज्जते इति पाठे पदेषु वाक्यांशभूतेषु सुप्तिङन्तरूपेषु न च संसज्जते न स्खलति आर्षसंस्कारेण वागजड़ता नासीति भावः । सकल एव बिम्बमिव अधरः दशनच्छदः हिमार्त्त इव वेपते कम्पते । भ्रुवौ प्रकामं सम्यक् विनते किन्तु युगपदेव समकालमेव भेदं विच्छेदं भङ्गिमिति यावत गते प्राप्ते । क्षतककोपे इत्थं लक्षणं न सम्भवतीति भावः । एवेत्यत्र एष इति पाठान्तरम् । पृथ्वीछन्दः जसौ जस यला वसुग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात् ।

(१३६) अधिकृत्य उद्दिश्येत्यर्थः ।

(१३७) मयीति । एवम् इत्थम् अस्मरणेन दारुणा चित्तवृत्तिः मनोवृत्तिः

[प्रकाशम्] । भद्रे ! प्रथितं दुष्मन्तस्य चरितं प्रजास्वपि इदं (१३८) न दृश्यते ।

शकु ।

तुह्मे ज्जेव पमाणं जाणध धम्मत्थिदिञ्च लोअस्स ।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ ॥(१३९)

सुट्ठु दाव अत्तच्छन्दाणुचारिणी गणिआ समुवट्ठिदा (क) । (१४०)

---

(क) यूयमेव प्रमाणं जानीथ धर्मस्थितिञ्च लोकस्य ।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः ॥
सुष्ठु तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता ।

---

यस्य तादृशे अतएव वृत्तं जातं रहसि एकान्ते यः प्रणयः तम् अप्रतिपद्यमाने अस्वीकुर्वति मयि सति अतिलोहिते अतिरक्ते अक्षिणी यस्याः तथाभूतया अनया कुटिलयोः भ्रुवोर्भेदात् तच्छलेन इत्यर्थः अतिरुषा अतिक्रोधेन स्मरस्य कामस्य शरासनं धनुः भग्नमिव । अत्र अपह्नवोत्प्रेक्षा । वसन्ततिलकं वृत्तम् ।

(१३८) प्रथितमिति । दुष्मन्तस्य चरितं परस्त्रीस्पर्शवैमुख्यरूपमिति भावः प्रथितं प्रसिद्धं दुष्मन्तः कदापि परस्त्रियं न कामयते इति भावः । प्रजासु अधिकृतजनेषु इत्यर्थः दुष्मन्तस्य इति शेषः अपि इदं परनारीधर्षणरूपं चरितमित्यर्थः ।

(१३९) यूयमिति । यूयमेव प्रमाणं प्रभव इति यावत् अथवा प्रमाणं शास्त्रतत्त्वं लोकस्य धर्मस्थितिं धर्मस्य वेधकर्मणः स्थितिं मर्य्यादां पद्धतिमिति यावत् जानीथ वित्थ । लज्जया विनिर्जिताः पराभूताः लज्जावशात् शास्त्रादितत्त्वकथने असमर्था इति भावः प्रमदाः नार्य्यः किमपि न जानन्ति ज्ञात्वापि न जानन्तीति भावः लज्जया प्रकाशकरणासामर्थ्यादिति भावः ।

(१४०) सुष्ठु सम्यक् इत्यर्थः आत्मनः स्वस्य छन्दः आशयः छन्दोऽभिप्राय आशय इत्यमरः । तम् अनुचरति अनुवर्त्तते इति तथोक्ता स्वेच्छाचारिणीत्यर्थः । गणिका वेश्या । समुपगता आगता अहमिति शेषः ।

गौत । जादे ! इमस्स पुरुवंसपच्चएण मुहमहुणो हिअ-अविसस्स (१४१) इत्थं समुवगदासि (क) ।

शकु । [पटान्तेन (१४२) मुखमाच्छाद्य रोदिति] ।

शार्ङ्ग । इत्थम् अप्रतिहतं चापल्यं दहति । (१४३)

अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ (१४४)

राजा । अयि ! भोः किम् अत्रभवतीप्रत्ययादेवास्मान् असम्भृतदोषैः अधिक्षिपन्ति (१४५) भवन्तः ?

---

(क) जाते ! अस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयविषस्य इत्थं समुपगतासि ।

---

(१४१) जाते वत्से ! पुरुवंशप्रत्ययेन पुरुवंशः अतीव सदाशयत्वेन महत्त्वेन च प्रथितः तस्य प्रत्ययेन विश्वासेन । मुखमधोः मुखे मधु यस्य तादृशस्य किन्तु हृदयविषस्य हृदये विषं यस्य तथाभूतस्य जनस्य इति शेषः ।

(१४२) पटान्तेन वसनाञ्चलेन ।

(१४३) अप्रतिहतम् अबाधितं चापल्यम् अविमृश्यकारित्वरूपमिति यावत् यत्र च विमृश्यकारितायां बाधा स्यात् सा स्वत एव हीना न स्वजनं तापयतीति भावः ।

(१४४) अत इति । अतः अस्मात् कारणात् अविमृश्यकारिताया दहनकारित्वादित्यर्थः परीक्ष्य विविच्य कर्त्तव्यं कार्य्यमिति शेषः विशेषात् रहः एकान्ते सङ्गतं सम्मेलनं परीक्ष्य कर्त्तव्यमिति शेषः । अज्ञातम् अविदितं व्यवहारेष्व इति शेषः हृदयं येषां तेषु सौहृदं प्रणयः एवम् इत्थम् अनुभूतप्रायं यथा तथा वैरीभवति शत्रुभवति तापयतीति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(१४५) अत्रभवतीप्रत्ययात् अत्रभवत्याः मान्यायाः शकुन्तलायाः प्रत्ययात् सुशीलत्वेन विश्वासादित्यर्थः असम्भृतदोषैः अकृतदोषैः अकृतापराधैः इत्यर्थः । अधिक्षिपति तिरस्कुर्वन्ति ।

शार्ङ्ग । [सासूयम्] (१४६)। श्रुतं भवद्भिरधरोत्तरम् । (१४७)

आजन्मनः शाठ्यमशिक्षितो यः
तस्याप्रमाणं वचनं जनस्य ।
पराभिसन्धानमधीयते यैः
विद्येति ते सन्तु किलाप्तवाचः ॥ (१४८)

राजा । अहो ! सत्यवादिनः ! अभ्युपगतं (१४९) तावत् अस्माभिः, एवंविधा (१५०) एव वयं, किं पुनरिमाम् अभिसन्धाय (१५१) लभ्यते ?

शार्ङ्ग । विनिपातः । (१५२)

राजा । विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत् । (१५३)

(१४६) सासूयम् असूया गुणेषु दोषारोपणं तत्सहितं वस्तुतो राज्ञो दोषो नास्ति दुर्वाससः शाप एव एवं विसंवादहेतुः शार्ङ्गरवस्तु एतदज्ञात्वा राज्ञ एव दोष इति मन्यते इत्यतः सासूयमित्युक्तम् ।

(१४७) अधरोत्तरं निकृष्टमुत्तरम् ।

(१४८) आजन्मन इति । यः आजन्मनः उत्पत्तिमारभ्य इत्यर्थः शाठ्यं कैतवं न शिक्षितः तस्य जनस्य वचनम् अप्रमाणम् असत्यम् । यैः जनैः परेषाम् अन्येषाम् अभिसन्धानं वञ्चनं विद्येति अधीयते शिक्ष्यते ते जनाः आप्तवाचः सन्तु किल भवन्ति एव । राजनीतिः केवलं परपराजयार्थं विविधकैतवपूर्णा तदनुशीलिनो राजानः सुतरां परवञ्चका भवन्तीति भावः । उपजाति वृत्तम् ।

(१४९) सत्यवादिन इति । सोल्लुण्ठनोक्तिः । अभ्युपगतं स्वीकृतम् ।

(५०) एवंविधाः पराभिसन्धायिन इत्यर्थः ।

(१५१) इमां शकुन्तलाम् अभिसन्धाय प्रताय्य ।

(१५२) विनिपातः विध्वंसः ।

(१५३) अश्रद्धेयम् अविश्वास्यं पौरवाणाम् अतिधार्मिकत्वात् न तेषां कथमपि विनिपातो भवितुमर्हति अधार्मिका एव विनिपातं लभन्ते इति भावः ।

शार्ङ्ग । भो राजन् ! किमत्र उत्तरैः (१५४) अनुष्ठितो गुरुनियोगः सम्प्रति प्रतिनिवर्त्तामहे वयम् ।

तदेषा भवतः पत्नी, त्यज वैनां गृहाण वा ।
उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी ॥ (१५५)

गतमि ! गच्छाग्रतः ।

[इति सर्वे प्रस्थिताः] ।

शकु । अहं दाणिं इमिणा किदवेण विप्पलद्धा (१५६) तुम्मेवि मं परिच्चअध ? (क) । [इत्यनुप्रस्थिता गौतमीमनुगच्छति] ।

गौत । [स्थित्वा परिवृत्यावलोक्य च] । वच्छ सङ्गरव ! अणुगच्छदि णो करुणपरिदेविणी (१५७) सउन्तला, पच्चादेसपरुसे (१५८) भत्तरि किं करेदु तवस्सिणी (ख) । (१५९)

(क) अहमिदानीम् अनेन कितवेन विप्रलब्धा, यूयमपि मां परित्यजथ ?

(ख) वत्स शार्ङ्गरव ! अनुगच्छति नः करुणपरिदेविनी शकुन्तला, प्रत्यादेशपरुषे भर्त्तरि किं करोतु तपस्विनी ।

---

(१५४) उत्तरैः बहुवचनात् पुनः पुनः प्रतिवचनैरित्यर्थः ।

(१५५) तदिति । तत् तावत् एषा शकुन्तला भवतः पत्नी एनां त्यज वा गृहाण वा । हि यतः उपयन्तुः परिणेतुः । दारेषु पत्न्यां सर्वतोमुखी सर्वप्रकारा प्रभुता कर्तृत्वम् अस्तीति शेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(१५६) कितवेन धूर्त्तेन । विप्रलब्धा प्रतारिता ।

(१५७) करुणपरिदेविनी करुणं यथा तथा विलपन्तीत्यर्थः ।

(१५८) प्रत्यादेशपरुषे परित्यागदारुणे ।

(१५९) तपस्विनी वराकी ।

शार्ङ्ग । [सरोषं प्रतिनिवृत्त्य] । आः पुरोभागिनि ! (१६०) किमिदं स्वातन्त्र्यम् (१६१) अवलम्बसे ?

शकु । [भीता वेपते] ।

शार्ङ्ग । शकुन्तले ! शृणोतु भवती

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पुनरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम् ॥ (१६२)

तिष्ठ, साधयामो (१६३) वयम् ।

राजा । भोः तपस्विन् ! किम् अत्रभवतीं विप्रलभसे ? (१६४) कुतः

(१६०) पुरोभागिनि दोषैकदर्शिनि दोषकारिणीत्यर्थः अविमृश्यकारिणीति भावः दोषैकदृक् पुरोभागीत्यमरः ।

(१६१) स्वातन्त्र्यं स्वाधीनताम् ।

(१६२) यदीति । क्षितिपो नृपतिः यथा वदति नाहमस्याः परिणेतेति कथयति, यदि त्वं तथा असि अनेनापरिणीता भवसि, तदा त्वया उत्कुलया उद्गतं कुलं यस्याः तया किं पुनः ? न किमपि फलमस्तीत्यर्थः । अथ यदि त्वम् आत्मनः स्वस्य शुचि पवित्रं निर्दोषमित्यर्थः व्रतं नियमं पातिव्रत्यमिति भावः वेत्सि जानासि तदा पतिगृहे तव दास्यमपि कैङ्कर्य्यमपि क्षमं योग्यम् उचितम् इत्यर्थः । द्रुतविलम्बितं वृत्तं द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ।

(१६३) साधयामः गच्छामः प्रायेण एतन्नकः साधिगमः स्थाने प्रयुज्यते इति नाट्यशास्त्रात् ।

(१६४) विप्रलभसे प्रतारयसि ।

कुमुदान्येव शशाङ्कः, सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ (१६५)

शार्ङ्ग । राजन् ! अथ पूर्ववृत्तं व्यासङ्गात्(१६६) विस्मृतं भवेत् तदा कथम् अधर्म्मभीरोः (१६७) दारपरित्यागः ? ।

राजा । भवन्तमेव अत्र गुरुलाघवं (१६८) पृच्छामि ।

मूढ़ः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ॥ (१६९)

पुरोधाः । [विचार्य्य] । यदि तावदेवं क्रियताम् ।

राजा । अनुशास्तु (१७०) मां गुरुः ।

(१६५) कुमुदानीति । शशाङ्कः चन्द्रः कुमुदान्येव न तु पङ्कजानीत्येवकारार्थः सविता सूर्य्यः पङ्कजान्येव कमलान्येव न तु कुमुदानीत्येवकारार्थः प्रबोधयति विकासयति, हि तथाहि वशिनां जितेन्द्रियाणां धार्मिकाणामिति यावत् वृत्तिः व्यवहारः परपरिग्रहस्य परनार्य्याः संश्लेषात् समालिङ्गनात् संसर्गादिति यावत् पराङ्मुखी निवृत्तेत्यर्थः । समान्येन विशेषसमर्थनरूपार्थान्तरन्यासेन अनुप्राणितः अप्रस्तुतप्रशंसालङ्कारः । आर्य्यावृत्तम् ।

(१६६) अथ यदि पूर्ववृत्तं पूर्वजातं परिणयनमिति भावः व्यासङ्गात् कार्य्यान्तरव्यापृतचित्तत्वादित्यर्थः ।

(१६७) अधर्मभीरोः पापभीतस्य ।

(१६८) गुरुलाघवं गुरुश्च लघुश्च तौ गुरुलघू तयोर्भावः गुरुलाघवं तत् ग्रहणं गुरु वा लघु, त्यागश्च गुरुः वा लघुरिति भावः ।

(१६९) मूढ़ इति । अहं मूढ़ः व्यासङ्गात् अजातस्मरणः स्याम्, एषा शकुन्तला मिथ्या वदेत् इति संशये अहं दारत्यागी भवामि ? अहो अथवा परस्त्रीस्पर्शात् परनारीग्रहणात् पांशुलः कलङ्कितः पापीत्यर्थः भवामि ? पथ्यावक्त्रं वृत्तम् ।

(१७०) अनुशास्तु उपदिशतु ।

पुरो। अत्रभवती तावदाप्रसवात् अस्मद्गृहे तिष्ठतु।

राजा। कुत इदम्?।

पुरो। त्वं साधुनैमित्तिकैरुपदिष्टपूर्वः प्रथममेव चक्रवर्त्तिनं (१७१) पुत्रं जनयिष्यसि इति, स चेन्मुनिदौहित्रः तल्लक्षणोपपन्नो भविष्यति, ततोऽभिनन्द्य शुद्धान्तम् (१७२) एनां प्रवेशयिष्यसि, विपर्य्यये (१७३) त्वस्याः पितुः समीपगमनं स्थितमेव।

राजा। यथा गुरुभ्यो रोचते।

पुरो [उत्थाय]। वत्से! इत इतोऽनुगच्छ माम्।

शकु। भअवदि वसुन्धरे! देहि मे अन्तरं (क)। (१७४)

इति सह पुरोधसा गौतमीतपस्विभिश्च रुदती निष्क्रान्ता।

राजा। [शापव्यवहितस्मृतिः शकुन्तलागतम् (१७५) एव चिन्तयन्ति]।

[नेपथ्ये]। आश्चर्य्यम् आश्चर्य्यम्!

राज। [कर्णं दत्त्वा]। किं नु खलु स्यात्?।

---

(क) भगवति वसुन्धरे! देहि मे अन्तरम्।

(१७१) साधुनैमित्तिकैः निमित्तं लक्षणं आमनन्तीति नैमित्तिकाः दैवज्ञा इत्यर्थः साधवश्च ते नैमित्तिकाश्चेति साधुनैमित्तिकाः तैः। आदिष्टपूर्वः पूर्वमुक्तः। चक्रवर्त्तिनं सम्राजं तल्लक्षणोपेतमित्यर्थः।

(१७२) शुद्धान्तमन्तःपुरम्।

(१७३) विपर्य्यये तदन्यथात्वे।

(१७४) अन्तरम् अवकाशम्। स्थानमित्यर्थः।

(१७५) शापव्यवहितस्मृतिः शापेन दुर्वाससः अभिसम्पातेन व्यवहिता तिरोहिता स्मृतिः यस्य तथोक्तः। शकुन्तलागतं शकुन्तलासम्बन्धम्।

पुरोधा। [प्रविश्य। सविस्मयम्]। देव! अद्भुतं खलु। संवृत्तम्।

राजा। किमिव?

पुरो। देव! परावृत्तेषु (१७६) कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता।

राजा। ततः किम्?

पुरो।

स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारात्
उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत्॥ (१७७)

[सर्वे विस्मयं रूपयन्ति।

राजा। भगवन्! प्रागेव अस्माभिरेषोऽर्थः प्रत्यादिष्टः (१७८) किं मृषा (१७९) तर्केण अन्विष्यते, विश्राम्यताम्।

---

(१७६) परावृत्तेषु प्रतिनिवृत्तेषु।

(१७७) सेति। सा बाला स्वानि निजानि भाग्यानि अदृष्टानि स्वामिभाग्यानि इति पाठे स्वामिनः भाग्यानि स्वामिसम्बन्धभाग्यानीत्यर्थः निन्दन्ती अधिक्षिपन्ती बाहूत्क्षेपं बाहू उत्क्षिप्य णमुल्प्रत्ययः अथवा बाह्वोरुत्क्षेपो यस्मिन् तद् यथा तथा रोदितुं क्रन्दितुं प्रवृत्ता च। स्त्रिया इव संस्थानम् आकृतिः यस्य तादृशं ज्योतिः अप्सरस्तीर्थम् अप्सरसां तीर्थं गङ्गावतरणघट्टविशेषं यत्र अप्सरसः समागत्य गङ्गायां स्नानादिकं कुर्वन्तीति भावः। आरात् समीपे आराद् दूरसमीपयोः इत्यमरः। प्रादुर्भूयेत्यध्याहार्य्यम् एनां बालाम् अङ्के क्रोड़े उत्क्षिप्य आदाय तिरोभूत अन्तर्धानम् अगात्। शालिनीवृत्तं, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात्।

(१७८) अर्थः विषयः। प्रत्यादिष्टः निराकृतः।

(१७९) मृषा मिथ्या।

पुरोधाः। विजयस्व। [इति निष्क्रान्तः]।

राजा। वेत्रवति! पर्य्याकुलोऽस्मि, शयनीयगृहमार्गम् आदेशय।

प्रती। इदो इदो देवो। (क)। [इति प्रस्थिता]।

राजा। [परिक्रम्य स्वगतम्]।

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम्॥ (१८०)

इति निष्क्रान्ताः सर्वे।

पञ्चमोऽङ्कः।

---

# अथ पञ्चमाङ्कांशोऽङ्कावतारः।

ततः प्रविशति नागरकश्यालः (१) पश्चाद्बद्धं पुरुषमादाय रक्षिणौ (२) च।

रक्षिणौ। [पुरुषं ताड़यित्वा]। अले कुम्भिलआ! (३)

---

(क) इत इतो देव!।

---

(१८०) काममिति। प्रत्यादिष्टां निराकृतां परित्यक्तामित्यर्थः मुनेः कण्वस्य तनयां शकुन्तलां कामं सम्यक् केनापि प्रकारेण इति भावः परिग्रहं परिणीतां स्वां पत्नीं न स्मरामि, तु किन्तु बलवत् अत्यर्थम् दूयमानं तप्यमानं हृदयं मां प्रत्याययतीव विश्वासयतीव मुनितनया इयं परिगृहीता इति बोधयतीवेत्यर्थः। उत्प्रेक्षालङ्कारः। आर्य्याजातिः।

---

(१) नागरकश्यालः नगरं रक्षतीति नागरः ततः स्वार्थे कन्प्रत्ययः। तस्य श्यालः पत्नीभ्राता श्यालाः स्युर्भ्रातरः पत्न्या इत्यमरः।

(२) रक्षिणौ प्रहरिणौ।

(३) कुम्भिलकः चौरः।

कधेहि कहिं तुए एसे महामणिभासुले उक्किसणामाक्खले (४) लाअकीए अङ्गुलीअए समासादिदे ? (क)।

पुरुष:। [भीतिनाटितकेन]। पसीदन्तु (५) पसीदन्तु मे भावमिस्से ( ६ ) ण हग्गे ईदिसस्से अकज्जस्स ( ७ ) कालके (क)।

एक:। किस्सु क्खु सोहणे ब्रह्मणेसि त्ति कदुअ लञ्ञा दे पड़िग्गहे दिस्से ? (ख)।

पुरुष:। सुणुध दाव, हग्गे क्खु सक्कावदालवासी धीवले (ग)।

द्वितीय:। अले पाअच्चले! (८) किं तुमं अह्मेहिं वसदिं जादिञ्च पुच्छीअसि ? (घ)।

(क) अरे कुम्भिलक! कथय कुत्र त्वया एतन्महामणिभासुरमुत्कीर्णनामाचरं राजकीयमङ्गुरीयकं समासादितम् ?

(क) प्रसीदन्तु प्रसीदन्तु मे भावमिश्रा:! न अहमीदृशस्य अकार्य्यस्य कारक:।

(ख) किं नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्त: ?

(ग) शृणुत तावत्, अहं खलु शक्रावतारवासी धीवर:।

(घ) अरे पाटच्चर! किं त्वमस्माभि: वसतिं जातिञ्च पृच्छ्यसे ?

---

(४) महामणिभासुरं महता मणिना रत्नेन उपरिनिहितेन इति भाव: भासुरं समुज्ज्वलम्। उत्कीर्णनामाचरम् उत्कीर्णानि अङ्कितानि नामाचराणि यस्मिन् तथोक्तम्।

(५) प्रसीदन्तु अनुगृह्णन्तु।

(६) भावमिश्रा भावा: विद्वांस: तेषु मिश्रा: श्रेष्ठा:। भावो विद्वान् इत्यमर:।

(७) अकार्य्यस्य चौर्य्यस्य।

(८) पाटच्चर: चौर:।

नाग। सूचअ! कधेदु सव्वं अणुक्कमेण (९) मा अन्तरा (१०) पड़िबन्धेध (क)।

उभौ। जं आवुत्ते(११)आणवेदि, लवेहि(१२)ले (ख)।

धीव। सो इग्गे जालवलिसप्पहुदिहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं (१३) कलेमि (ग)।

नाग। [विहस्य]। विसुद्धो दाणिं से आजीवो(१४)(घ)

धीव। भट्टके! मा एव्वं भण।

सहजे किल जे विणिन्दिदे णहु से कम्म विवज्जणीअए।
पसुमालणकम्मदालुणे अणुकम्पामिदुकेवि सोत्तिए(ङ)॥ (१५)

---

(क) सूचक! कथयतु सर्वमनुक्रमेण, मा अन्तरा प्रतिबध्नीयाः।

(ख) यदावुत्त आज्ञापयति, लपरे। Brother in law.

(ग) सोऽहं जालवड़िशप्रभृतिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।

(घ) विशुद्ध इदानीमस्याजीवः।

(ङ) भर्त्तः! मैव भण।

सहजं किल यद्विनिन्दितं न तु तत्कर्म विवर्जनीयकम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुकोऽपि श्रोत्रियः॥

---

(९) अनुक्रमेण पौर्वापर्य्यक्रमेण इत्यर्थः।

(१०) अन्तरा मध्ये।

(११) आवुत्तः भगिनीपतिः। भगिनीपतिरावुत्त इत्यमरः।

(१२) लप कथय।

(१३) कुटुम्बभरणं परिवारपालनम्।

(१४) आजीवः जीविका जीवनोपाय इत्यर्थः। विशुद्धः निर्दोषः सोल्लुण्ठनोक्तिरियम्।

(१५) सहजमिति। यत् विनिन्दितं विगर्हितं कर्म सहजं किल नैसर्गिकम्

नाग । तदो तदो ? (क) ।

धीव । एक्कस्सिं दिअसे मए लोहिदमच्छके पाविदे, तदो खण्डसो कप्पिदे, जाव तस्स उदलब्भन्तले पेक्खामि दाव एदे महालअणभासुले अङ्गुलीअए पेक्खिदे, पच्चा इध विक्कअत्थं दंसअन्ते ज्जेव गहिदे भावमिस्सेहिं, एत्तिके दाव एदस्स आगमे, अध मं मालेध कुट्टेध वा (ख) ।

नाग । [अङ्गुरीयकमाघ्राय] । जालुअ ! मच्छोदलब्भन्तलगदो त्ति णत्थि सन्देहो, जदो अअं आमिसगन्धो

(क) ततस्ततः ?

(ख) एकस्मिन् दिवसे मया रोहितमत्स्यः प्राप्तः, ततः खण्डशः कल्पितः यावत्तस्य उदराभ्यन्तरे प्रेक्षे, तावदेतन्महारत्नभासुरमङ्गुरीयकं प्रेक्षितम्, पश्चादिह विक्रयार्थं दर्शयन्नेव गृहीतो भावमिश्रैः, एतावांस्तावदेतस्यागमः, अथ मां मारयत कुट्टयत वा ।

एव कुलक्रमागतमेव इत्यर्थः तत् कर्म न तु विवर्जनीयकं नैव परित्याज्यं येनास्य पितरो याताः येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यतीति शास्त्रादिति भावः । अनुकम्पया दयया मृदुकोऽपि सुकोमलप्रकृतिरपि श्रोत्रियः वेदवित् ब्राह्मणः श्रोत्रियच्छान्दसौ समावित्यमरः । पशुमारणकर्मणा यज्ञकर्मणि पशुवधकार्य्येण दारुणः निष्ठुरः दृश्यते इति शेषः । तस्मात् सदोषमपि कौलिकं कर्म अनुष्ठेयमेव इति भावः । उक्तञ्च गीतायाम् । सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेदिति ।

वाअदि, आगमो (१६) दाणिं एदस्स एसो विमरिसिदव्वो (१७) ता एध, लाअउलं ज्जेव गच्छह्म (क)।

रक्खिणौ। [धीवरं प्रति]। गच्छ ले गण्ठिच्छेदअ! गच्छ (ख)। [इति परिक्रामन्ति]।

नाग। सूअअ! इध गोउलदुआले अप्पमत्ता परिपालेध मं (१८) जाव लाअउलं पवेसिअ णिक्कमामि (ग)।

उभौ। पविसदु आवुत्ते सामिप्पसादत्थं (घ)।

नाग। [परिक्रम्य निष्क्रान्तः]।

सूच। जालुअ! चिलाअदि (१९) क्खु आवुत्ते (ङ)।

(क) जालुक! मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः, यतोऽयमामिषगन्धो वाति, आगम इदानीमेतस्यैष विमर्ष्टव्यः, तदेत, राजकुलमेव गच्छामः।

(ख) गच्छ रे ग्रन्थिच्छेदक! गच्छ।

(ग) सूचक! इह गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं मां, यावद्राजकुलं प्रविश्य निष्क्रामामि।

(घ) प्रविशतु आवुत्तः स्वामिप्रसादार्थम्।

(ङ) जालुक! चिरयति खलु आवुत्तः।

(१६) आगमः प्राप्तिवृत्तान्तः।

(१७) विमर्ष्टव्यः सत्यमेतत् न वेति सम्यक् ज्ञातव्य इत्यर्थः।

(१८) गोपुरद्वारे पुरद्वारन्तु गोपुरमित्यमरः गोपुरमेव द्वारं तस्मिन् नगरद्वारे इत्यर्थः। अप्रमत्तौ अवहितौ यथायं न पलायते इति भावः। प्रतिपालयतम् अपेक्षेयाम्।

(१९) चिरयति विलम्बते।

जालु । णं अवसलोवसप्पणीआ(२०)लाआणो होन्ति(क)

सूच । फुल्लन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं (ख) ।

धीव । णालिहदि भावे अआलणमालके भविदुं (ग) ।

जालु । [विलोक्य] । एसे अम्हाणं ईस्सले (२१) पत्ते गेह्लिअ लाअसासणं आअच्छदि, सम्पदं ऐसे सउलाणं मुहं देक्खदु, अहवा गिद्धसिआलाणं बली होदु (घ) ।

नाग । [प्रविश्य] सिग्घं सिग्घं एदं (ङ) । [इत्यर्द्धोक्ते] ।

धीव । हा, हदोह्मि ! (च) । [इति विषादं नाटयति] ।

नाग । मुञ्चध जालोवजीविणं । उववस्से (२२) से अङ्गुलिअस्स आगमे, अह्म सामिणा जाव कधिदं (छ) ।

---

(क) ननु अवसरोपसर्पणीया राजानो भवन्ति ।

(ख) स्फुरतो मेऽग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितुम् ।

(ग) नार्हति भावोऽकारणमारको भवितुम् ।

(घ) एषोऽस्माकमीश्वरः पत्रे गृहीत्वा राजशासनमागच्छति साम्प्रतमेष स्वकुल्यानां मुखं प्रेक्षतामथवा गृध्रशृगालानां बलिर्भवतु ।

(ङ) शीघ्रं शीघ्रमेतम् ।

(च) हा, हतोऽस्मि !

(छ) मुञ्चतं जालोपजीविनम् । उपपन्नोऽस्य अङ्गुरीयस्यागमः अस्मत्स्वामिना यावत्कथितम् ।

(२०) अवसरोपसर्पणीयाः अवसरे समये उपसर्पणीयाः उपगम्य निवेदनीया इति भावः ।

(२१) ईश्वरः प्रभुः ।

(२२) उपपन्नः युक्तः सत्यमेवोक्तमनेनेति भावः ।

सूच। जह्वा आणवेदि आवुत्ते, जमवसदिं गदुअ पड़िणिउत्ते क्खु एसे (क)। [इति धीवरं बन्धनान्मोचयति]।

धीव। भट्टके! सम्पदं तुह्म केलके मे जीविदे (ख) [इति पादयोः पतति]।

नाग। उत्थेहि, एसे भट्टिणा अङ्गुलीअमुल्लसम्मिदे-पारिदोसिए दे प्पसादीकिदे, ता गेह्ण एदं (ग)। [इति धीवराय कटकं (२३) ददाति।

धीव। [सहर्षं सप्रणामञ्च प्रतिगृह्य] अणुग्गहीदोह्मि (घ)।

जालु। एसे क्खु रखा तधा अणुग्गहिदे जधा सूलादो ओदालिअ हत्थिक्खन्धे समालोविदे (ङ)।

सूच। आवुत्ते। पालिदोसिएण जाणामि महालिह्ल-लदणेण अङ्गुलीएण सामिणो बहुमदेण होदव्वं (च)।

नाग। ण तस्सिं भट्टिणो महालिहलदणं त्ति कदुअ पलिदोसो, एत्ति उण तक्केमि (छ)।

(क) यथाज्ञापयत्यावुत्तः, यमवसतिं गत्वा प्रतिनिवृत्तः खलु एषः।

(ख) भर्त्तः! साम्प्रतं तव क्रीतकं मे जीवितम्।

(ग) उत्तिष्ठ, एतद्भर्त्रा अङ्गुरीयमूल्यसम्मितं पारितोषिकं ते प्रसादीकृतम्, तद्गृहाणैतत्।

(घ) अनुगृहीतोऽस्मि।

(ङ) एष खलु राज्ञा तथानुगृहीतः यथा शूलादवतार्य्य हस्तिस्कन्धे समारोपितः।

(च) आवुत्त! पारितोषिकेन जानामि महार्हरत्नेन अङ्गुरीयकेण स्वामिनो बहुमतेन भवितव्यम्।

(छ) न तस्मिन् भर्त्तुः महार्हरत्नमिति कृत्वा परितोषः, एतत्पुनस्तर्कयामि।

---

(२३) कटकं वलयम्।

उभौ। किं उण (क) ?

नाग। तस्स दंसणेण भट्टिणा कोवि अहिमदो जणो सुमरिदोत्ति, जदो मुहुत्तअं पइदिगम्भीरोवि पज्जुस्सुअमणो आसी (ख)।

सूच। तोसिदे सोइदे भ दाणिं भट्टा आवुत्तेण (ग)।

जालु। णं भणेमि इमस्स मच्छसत्तुणो किदे (घ)।
[इति धीवरमसूयया पश्यति)।

धीव। भट्टालके ! इदो अद्धं तुह्माणम्मि सुला मुल्लं होदु(ङ)

जालु। धीवल ! महत्तले सम्पदं अह्माणं पिअवअस्सके संवुत्तेसि, कादम्बलीसक्खिके (२४) क्खु, पढमं सोहिदे इच्छीअदि, ता एहि सुण्डिआलअं ज्जेव गच्छह्म (च)।

इति निष्क्रान्ताः सर्वे।

अङ्कावतारः। (२५)

---

(क) किं पुनः ?

(ख) तस्य दर्शनेन भर्त्रा कोऽपि अभिमतो जनः स्मृत इति, यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत्।

(ग) तोषितः शोचितश्च इदानीं भर्त्रा आवुत्तेन।

(घ) ननु भणामि अस्य मत्स्यशत्रोः कृते।

(ङ) भट्टारक ! इतोऽर्द्धं युष्माकमपि सुरामूल्यं भवतु।

(च) धीवर ! महत्तरः साम्प्रतमस्माकं प्रियवयस्यः संवृत्तोऽसि, कादम्बरीसाक्षिकं खलु प्रथमसौहृदमिष्यते, तदेहि शौण्डिकालयमेव गच्छामः।

---

(२४) कादम्बरीसाक्षिकं कादम्बरी सुरा साक्षी यत्र तत्।

(२५) अङ्कावतारः अर्थोपक्षेपकविशेषः। उक्तञ्च तल्लक्षणं दर्पणे, अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः। यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृत इति। अस्य धीवराङ्कावतारकत्वात् अङ्कावतार इति संज्ञा।

# षष्ठोऽङ्कः ।

ततः प्रविशति आकाशयानेन मिश्रकेशी । (१)

मिश्र । णिव्वत्तिदं (२) मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसन्दिट्ठं (३) ता जाव साहुजणस्स (४) अहिसेअकालो भवे दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं, णं मेणआसम्बन्धेण शरीरभूदा (५) दाणिं मे सउन्तला, तए अ दुहिदुणिमित्तं सन्दिट्ठपुव्वह्मि (६) । [समन्तादवलोक्य] (७) । किस्, क्खु, उवत्थिदुच्छवे (८) वि दिअहे णिरुच्छवारम्भं (९) विअ एदं राअउलं दीसदि,

(१) आकाशयानेन विमानेन । मिश्रकेशी तदाख्या काचिदप्सराः ।

(२) निर्वर्त्तितं सम्पादितम् ।

(३) पर्य्यायनिर्वर्त्तनीयं पर्य्यायेण वारक्रमेण निर्वर्त्तनीयं सम्पादनीयम् । अप्सरस्तीर्थसन्दिष्टम् अप्सरसां तीर्थे घट्टे अप्सरसो यत्र स्नानादिकं कुर्वन्ति तस्मिन् गङ्गायाम् अवतरणस्थाने सन्दिष्टम् अप्सरोभिः कर्त्तव्यत्वेन उपदिष्टमित्यर्थः ।

(४) साधुजनस्य भद्रलोकस्य ।

(५) मेनकासम्बन्धेन मेनकायाम् अप्सरसि सख्यभावेन इत्यर्थः शरीरभूता आत्मदेहतुल्या ।

(६) तया मेनकया दुहितृनिमित्तं दुहितुः कन्यायाः शकुन्तलायाः निमित्तम् । सन्दिष्टपूर्वा पूर्वं सन्दिष्टा आदिष्टा शकुन्तलाविरहे राजवार्त्तोपलब्धये इति शेषः ।

(७) समन्तात् चतुर्दिक्षु ।

(८) उपस्थितोत्सवे उपस्थित आगतः उत्सवः वसन्तोत्सवः यस्मिन् तादृशे ।

(९) निरुत्सवारम्भः नास्ति उत्सवारम्भः यस्मिन् तादृशम् ।

अत्थि मे विहवो (१०) सव्वं पणिधाणेण (११) जाणिदुं किन्तु सहीए मए आदरो माणइदव्वो (१२) भोदु, इमाणं-ज्जेव उज्जाणवालआणं पास्सपरिवत्तिणी भविअ तिरक्करिणीए विज्जाए पच्छण्णा उवलहिस्सं (क)। (१३) इति नाट्येनावतीर्य्य स्थिता]।

ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठेऽपरा च।

प्रथमा। कधं उवत्थिदो महुमासो ? (ख)। (१४)

---

(क) निर्वर्त्तितं मया पर्य्यायनिर्वर्त्तनीयमप्सरस्तीर्थसन्निध्यं, तद्यावत् साधुजनस्य अभिषेककालो भवेत् तावत् साम्प्रतमस्य राजर्षेः वृत्तान्तं प्रत्यक्षीकरिष्यामि, ननु मेनकासम्बन्धेन शरीरभूता इदानीं मे शकुन्तला तया च दुहितृनिमित्तं सन्दिष्टपूर्व्वास्मि। किं नु खलु उपस्थितोत्सवेऽपि दिवसे निरुत्सवारम्भमिव एतद्राजकुलं दृश्यते, अस्ति मे विभवः सर्वं प्रणिधानेन ज्ञातुम्, किन्तु सख्या मया आदरो मानयितव्यः, भवतु एषामेवोद्यानपालकानां पार्श्वपरिवर्त्तिनी भूत्वा तिरस्करिण्या विद्यया प्रच्छन्ना उपलप्स्ये।

(ख) कथमुपस्थितो मधुमासः ?

---

(१०) विभवः शक्तिः।

(११) प्रणिधानेन ध्यानेन।

(१२) सख्या मेनकायाः आदरः उपदेशाग्रहः मानयितव्यः पालनीय इति यावत् सख्या यथा राजवार्त्ताज्ञानाय उपदिष्टं तथा मया अनुष्ठातव्यमिति निष्कर्षः।

(१३) तिरस्करिण्या अदृश्यकारिण्या। विद्यया मन्त्रेण इति यावत् प्रच्छन्ना अलक्षितेत्यर्थः। उपलप्स्ये ज्ञास्यामि।

(१४) मधुमासः वसन्तमासः चैत्रमास इत्यर्थः। स्यात् चैत्रे चैत्रिको मधुरित्यमरः।

आतम्महरिअवेरण्टं उस्ससिअं विअ वसन्तमासस्स।
दिट्टं चूअङ्कुरअं छणमङ्गलं णिअच्छामि (क)॥ (१५)

द्वितीया। परहुदिए! किं एदं एआइणी मन्तेसि? (ख)। (१६)।

प्रथमा। महुअरिए! चूदकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि (ग)। (१७)

द्वितीया। [सहर्षं त्वरया उपगम्य]। कधं उवत्थिदो महुमासो? (घ)।

प्रथमा। महुअरिए! तवावि एसो कालो मदविब्भमुग्गीदाणं (ङ)। (१८)

---

(क) आताम्रहरितवृन्तं उच्छ्वसितमिव वसन्तमासस्य।
दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि॥

(ख) परभृतिके! किमिदमेकाकिनी मन्त्रयसि?

(ग) मधुकरिके! चूतकलिकां प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति।

(घ) कथमुपस्थितो मधुमासः?

(ङ) मधुकरिके! तवापि एष कालो मदविभ्रमोद्गीतानाम्।

---

(१५) आताम्रेति। आताम्रम् आरक्तं हरितं श्यामं वृन्तं बन्धनं यस्य तथोक्तं क्षणमङ्गल्यम् उत्सवरूपमङ्गलाय हितं वसन्तमासस्य उच्छ्वसितं जीवितमिव चूताङ्कुरम् आम्रमुकुलं नियच्छामि नियुक्तं करोमि उत्सवार्थम् आदरेण गृह्णामीति यावत्। उत्प्रेक्षालङ्कारः।

(१६) मन्त्रयसि आलपसि।

(१७) परभृतिका अहमिति भावः कोकिला च। उन्मत्ता अत्यर्थमुल्लासिनी इत्यर्थः।

(१८) मदविभ्रमोद्गीतानां मदेन उल्लासेन यः विभ्रमः विलासः तेन उद्गीतानि उच्चैर्गानानि तेषाम्।

द्वितीया। सहि! अवलम्बस्स मं जाव अग्गपदे (१९) परिट्ठिदा भविअ चूअप्पसवं गेह्निअ (२०) सम्पादेमि कामदेवस्स अच्चणं (क)।

प्रथमा। जइ एव्वं ता ममावि अद्धं अच्चणफलस्स(ख)।

द्वितीया। सहि! अभणिदेवि (२१) एदं सम्पज्जइ एव्व जदो एक्कं ज्जेव णो एदं शरीरं द्विधा भिसं पजावइणा। [सखीमवलम्ब्य चूतप्रसवं गृहीत्वा]। अह्महे! अप्पबुद्धो(२२) चूअप्पसवो बन्धणभङ्गसुरही (२३) राअदि (ग)। [कपोतहस्तं (२४) कृत्वा।]

णमो भअवदे मअरद्धजाअ। (२५)

(क) सखि! अवलम्बस्व मां यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्य अर्चनम्।

(ख) यदि एवं तन्ममापि अर्द्धमर्चनफलस्य।

(ग) सखि! अभणितेऽपि इदं सम्पद्यत एव यत एकमेवावयोरिदं शरीरं द्विधा भिन्नं प्रजापतिना। अहो! अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभिः राजते।

---

(१९) अग्रपदे पादाग्रे।

(२०) चूतप्रसवं चूताङ्कुरम्। गृहीत्वा अवचित्य।

(२१) अभणितेऽपि अनुक्तेऽपि।

(२२) अप्रबुद्धः अस्फुटितः।

(२३) बन्धनभङ्गसुरभिः वृन्तभङ्गेन सौरभवान्।

(२४) कपोतहस्तं कपोतः पारावतः स इव हस्तः तम् अञ्जलिमित्यर्थः।

(२५) भगवते सर्वशक्तिमते। मकरध्वजाय कामाय।

अरिहसि मे चूअङ्कुर ! दिण्णो कामस्स गहिदचावस्स ।
पहिअजणजुअइलक्खो पञ्चन्तरिओ सरो होदुं (क) ॥ (२६)

[कञ्चुकी प्रविश्य सक्रोधम्]। मा तावदनात्मज्ञे ! (२७)
देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे ।

उभे। [भीते]। पसीददु पसीददु अज्जो, अगहिदत्था अह्मे (ख)। (२८)

कञ्चु। हुं, न किल श्रुतं भवतीभ्याम्? यद्वासन्तैस्तरुभिः अपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च (२९)। तथाहि

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः,
सन्नद्धं यदपि स्थितं कुरुवकं तत् कोरकावस्थया।

---

(क) नमो भगवते मकरध्वजाय।
अर्हसि मे चूताङ्कुर ! दत्तः कामस्य गृहीतचापस्य।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम् ॥

(ख) प्रसीदतु प्रसीदतु आर्य्यः, अगृहीतार्थे आवाम्।

---

(२६) अर्हसीति। हे चूताङ्कुर ! मे मया इत्यर्थः कर्त्तरि षष्ठी दत्तः अर्पितस्त्वं गृहीतचापस्य धनुर्धरस्य कामस्य पथिकजनानां युवतयः लक्ष्याणि शरव्याणि यस्य तथाभूतः पञ्चान्तरितः पञ्चाधिक इत्यर्थः शरो भवितुम् अर्हसि।

(२७) अनात्मज्ञे आत्मज्ञानरहिते ! मूढ़े इत्यर्थः।

(२८) अगृहीतार्थे अगृहीतः अज्ञातः अर्थः वसन्तोत्सवप्रतिषेधाभिप्रायः याभ्यां तथाभूते।

(२९) प्रमाणीकृतं सभयं गृहीतमिति यावत्। तदाश्रयिभिः तद्वासन्ततरुनिलयैः पक्षिभिरित्यर्थः।

कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम् ॥ (३०)

मिश्र । णत्थि एत्थ सन्देहो, महाप्पहावो क्खु राएसी (क)

प्रथमा । अज्ज ! कदिचि दिअसाइं मित्तावसुणा रट्ठिएण (३१) भट्टिणो पादमूलं पेसिदा अह्मे इध पमदवणे चित्तकम्म अप्पिदुं, ता आगन्तुअदाए (३२) ण सुदपुव्वो अह्मेहिं एसो वुत्तन्तो (ख) । (३३)

कञ्चु । तेन हि न पुनरेवं प्रवर्त्तितव्यम् । (३४)

(क) नास्त्यत्र सन्देहः, महाप्रभावः खलु राजर्षिः ।

(ख) आर्य्य ! कतिचित् दिवसानि मित्रावसुना राष्ट्रियेण भर्त्तुः पादमूलं प्रेषिते आवाम् इह प्रमदवने चित्रकर्मार्पयितुं, तदागन्तुकतया न श्रुतपूर्व आवाभ्यामेष वृत्तान्तः ।

(३०) चूतानामिति । चिरं दीर्घकालं निर्गतापि चूतानाम् आम्राणां कलिका कोरकः स्वं रजः परागं न बध्नाति न जनयति नाविष्करोतीत्यर्थः । यदपि कुरुवकं तदाख्यपुष्पमुकुलं सन्नद्धं विकाशोन्मुखं दृश्यते इति शेषः तत् कुरुवकं कोरकावस्थया स्थितं न तु विकसितुं शक्तमिति भावः । शिशिरे गतेऽपि अतीतेऽपि वसन्तागमेऽपीत्यर्थः पुंस्कोकिलानां रुतं शब्दः कण्ठेषु स्खलितं किञ्चित् निर्गत्यैव भग्नमिति यावत् । शङ्के मन्ये स्मरोऽपि कामोऽपि चलितः भीतः सन् राजशासनादिति शेषः तूणात् तूणीरात् अर्द्धकृष्टम् अर्द्धाकृष्टं शरं संहरति पुनः तूण एव स्थापयति इत्यर्थः । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ।

(३१) राष्ट्रियेण नगराध्यक्षेण ।

(३२) आगन्तुकतया उदासीनतया ।

(३३) एष वृत्तान्तः वसन्तोत्सवप्रतिषेध इत्यर्थः ।

(३४) प्रवर्त्तितव्यम् आचरितव्यम् ।

उभे । [सकौतूहलम्] । अज्जो ! जइ इमिणा जणेण सोदव्वं ता कधेदु अज्जो किं णिमित्तं भट्टिणा वसन्तुस्सवो पड़िसिद्धोत्ति ? (क) ।

मिश्र । उच्छवप्पिआ क्खु राआणो होन्ति, ता एत्थ गुरुणा कारणेण होदव्वं (ख) ।

कञ्चु । [स्वगतम्] । बहुलीभूतः (३५) अयमर्थः, तत् किं न कथ्यते ?

प्रकाशम् । अस्ति भवत्योः कर्णपथमायातं शकुन्तला-प्रत्यादेशकौलीनम् ? (३६)

उभे । अज्ज ! सुदं रट्टिअमुहादो अङ्गुलीअअदंसणं जाव (ग) ।

कञ्चु । तेन हि स्वल्पं कथयितव्यम्, यदेव अङ्गुरीयदर्शनादनुस्मृतं देवेन सत्यमूढ़पूर्वा रहसि मया तत्रभवती शकुन्तला मोहात् प्रत्यादिष्टेति (३७) तदा प्रभृत्येव पश्चात्तापमुपगतो देवः । तथाहि

---

(क) आर्य्य ! यदि अनेन जनेन श्रोतव्यं तत्कथयतु आर्य्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध इति ।

(ख) उत्सवप्रियाः खलु राजानो भवन्ति, तदत्र गुरुणा कारणेन भवितव्यम् ।

(ग) आर्य्य ! श्रुतं राष्ट्रियमुखादङ्गुरीयकदर्शनं यावत् ।

---

(३५) बहुलीभूतः बहुशः प्रचरद्रूप इत्यर्थः ।

(३६) शकुन्तलाया प्रत्यादेशकौलीनं शकुन्तलायाः परित्यागप्रवादः ।

(३७) मोहात् अज्ञानात् विस्मरणादिति यावत् प्रत्यादिष्टा परित्यक्ता ।

रम्यं द्वेष्टि, यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते,
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो, यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीड़ावनम्रश्चिरम् ॥ (३८)

मिश्रा । पिअं मे पिअं (क) ।

कञ्चु । अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः (३९

उभे । जुज्जदि (ख) ।

[नेपथ्ये] । एदु एदु भवं (ग) ।

---

(क) प्रियं मे प्रियम् ।

(ख) युज्यते ।

(ग) एतु एतु भवान् ।

---

(३८) रम्यमिति । रम्यं रमणीयं वस्तु वसन्तोत्सवादिकं द्वेष्टि नाद्रियते इत्यर्थः । यथा पुरा पूर्ववत् प्रकृतिभिः प्रधानपुरुषैः मन्त्र्यादिभिरित्यर्थः प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे इत्यमरः । प्रत्यहं न सेव्यते नोपास्यते । राजकार्य्यं न पश्यतीति भावः । उन्निद्रः निद्राशून्य एव शय्याया उपान्तेषु प्रान्तेषु विवर्त्तनैः विलुण्ठनैः वा शय्यायाम् उपान्तविवर्त्तनैः पार्श्वपरिवर्त्तनैः क्षपाः रात्रीः गमयति यापयति । यदा च दाक्षिण्येन औदार्य्येण समानुरागत्वेन वा अनेकमहिलासु समरागी दक्षिणः कथित इति साहित्यदर्पणम् । अन्तःपुरेभ्यः शुद्धान्तमहिलाभ्यः उचिताम् अवश्यवक्तव्यामिति भावः वाचं वाक्यं ददाति ताभिः सह आलपतीति भावः तदा गोत्रेषु नामसु स्खलितः अन्यस्या नाम्नि उच्चरितव्ये शकुन्तलेति नामोच्चारणात् अप्रतिभ इति भावः चिरं बहुक्षणं व्रीड़या लज्जया अवनम्रः अधोमुख इत्यर्थः भवति च । शार्दूलविक्रीड़ितं वृत्तम् ।

(३९) प्रभवतः प्रकर्षेण सतः वैमनस्यात् विकृतमनस्कत्वात् । प्रत्याख्यातः प्रतिषिद्धः ।

कञ्चु। [कर्णं दत्त्वा]। अये! इत एवाभिवर्त्तते (४०) देवः, तद्गच्छतं स्वकर्मानुष्ठानाय।

उभे। तह (क)। [इति निष्क्रान्ते]।

ततः प्रविशति पश्चात्तापसदृशवेशो राजा विदूषकः प्रतीहारी च।

कञ्चु। [राजानं विलोक्य]। अहो! सर्वासु अवस्थासु रामणीयकम् (४१) आकृतिविशेषाणाम्। तथा हि एवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः। य एषः

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।
चिन्ताजागरणप्रताम्रनयनः, तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते॥ (४२

(क) तथा।

(४०) अभिवर्त्तते आगच्छति।

(४१) रामणीयकं रमणीयत्वम्।

(४२) प्रत्यादिष्टेति। प्रत्यादिष्टः परित्यक्तः विशेषेण मण्डनं स्वस्य अलङ्करणं कटककुण्डलादिभिरिति भावः तस्य विधिर्व्यापारः येन तथाभूतः। वामप्रकोष्ठे वाममणिबन्धे न तु दक्षिणप्रकोष्ठे इति भावः विशेषमण्डनविधेस्त्यागात् कथञ्चित् किञ्चिद्धारणं सर्वाङ्गीणमण्डनं नेति भावः। श्लथं शिथिलं शोकेनाङ्गकार्श्यादिति भावः एकमेव न तु द्वितीयं काञ्चनं सौवर्णं वलयं कटकं बिभ्रत् दधानः। श्वासेन उपरक्तः ताड़ितः अधरः यस्य तथाभूतः श्वासापरक्ताधर इति पाठे श्वासेन अपरक्तः अपगतरागः अधरो यस्य तथोक्तः। चिन्तया यत् जागरणं निद्राराहित्यं तेन प्रताम्रे आरक्ते नयने यस्य तथाभूतः। क्षीणोऽपि शीर्णोऽपि आत्मनः स्वस्य तेजोगुणैः अनुभावसदृशैः संस्कारेण शाणप्रदानादिना उल्लिखितः उद्घर्षितः परिष्कृत इति भावः महामणिरिव न आलक्ष्यते न प्रतीयते क्षीणत्वेनेति भावः। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्।

मिश्र । [राजानं विलोक्य] । ठाणे क्खु पच्चादेसविमाणिदावि इमस्स किदे (४३) सउन्तला किलिस्सदि । (क)

राजा । [ध्यानमन्दं परिक्रम्य] ।

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥ (४४)

मिश्र । णं ईदिसाइं तवस्सिणीए भागधेआइं । (ख) (४५)

विदू । [अपवार्य्य] । हुं, भूओवि लङ्घिदो एसो सउन्तलावादेण, ण आणे कधं चिकिच्छिदव्वो (४६) भविस्सदि (ग) ।

कञ्चु । [उपसृत्य] । जयति जयति देवः, देव ! प्रत्यवे-

---

(क) स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लिश्यति।

(ख) ननु ईदृशानि तपस्विन्या भागधेयानि ।

(ग) हुं, भूयोऽपि लङ्घित एव शकुन्तलावातेन, न जाने कथं चिकित्सितव्यो भविष्यति ।

---

(४३) अस्य राज्ञः कृते निमित्तम् ।

(४४) प्रथममिति । सारङ्गाक्ष्या मृगनयनया प्रियया शकुन्तलया प्रथमं पूर्वम् इदं हतहृदयं प्रतिबोध्यमानमपि विविधरूपेण स्मरणार्थं प्रेर्य्यमाणमपीति भावः सुप्तं निद्रितं चैतन्यं न प्राप्तमित्यर्थः सम्प्रति अनुशय दुःखाय पश्चात्तापदुःखप्राप्तये इत्यर्थः विबुद्धं जागरितं चैतन्यं प्राप्तम् । आर्य्याजातिः ।

(४५) भागधेयानि भाग्यानि । तपस्विन्या वराक्याः ।

(४६) चिकित्सितव्यः प्रतिविधेयः ।

क्षिताः प्रमोदवनभूमयः, यथाकाममध्यास्ताम् (४७) विनोदस्थानानि देवः।

राजा। वेत्रवति! मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितम् (४८) अस्माभिर्धर्मासनमध्यासितुं यत्प्रत्यवेक्षितम् आर्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यताम् इति।

प्रती। जं देवो आणवेदि (क)। [इति निष्क्रान्ता]।

राजा। पार्वतायन! त्वमपि स्वनियोगमशून्यं कुरु। (४९)

कञ्चु। यदाज्ञापयति देवः। [इति निष्क्रान्तः]।

विदू। किदं भवदा णिम्मक्खिअं (५०) सम्पदं सिसिरविच्छेअरमणीए (५१) इमस्सिं पमोदवणुद्देसे अत्ताणं विणोदेहि (ख)।

---

(क) यत् देव आज्ञापयति।

(ख) कृतं भवता निर्मक्षिकं साम्प्रतं शिशिरविच्छेदरमणीयेऽस्मिन् प्रमोदवनोद्देशे आत्मानं विनोदय।

---

(४७) अध्यास्ताम् अधितिष्ठतु।

(४८) चिरप्रबोधात् विलम्बेन निद्राभङ्गात् न सम्भावितं न पारितम्।

(४९) स्वनियोगं स्वाधिकारम् अशून्यं कुरु स्वकार्य्यम् अनुतिष्ठ।

(५०) निर्मक्षिकं नास्ति मक्षिकापि यत्र तादृशं निर्जनमिति भावः स्थानमिति शेषः।

(५१) शिशिरविच्छेदरमणीये शिशिरस्य विच्छेदेन व्यपगमेन वसन्तागमेन इत्यर्थः रमणीयं तस्मिन्।

राजा। [निश्वस्य]। वयस्य! यत् उच्यते रन्ध्रोपपातिनः अनर्था (५२) इति तत् अव्यभिचारि (५३)। पश्य

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः॥ (५४)

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम्।
अनुशयादनुरोदिमि चोत्सुकः,
सुरभिमाससुखं समुपैति च॥ (५५)

---

(५२) रन्ध्रोपपातिनः रन्ध्रे छिद्रे सति उपपतन्ति आगच्छन्तीति तथोक्ताः अनर्थाः विपदः।

(५३) अव्यभिचारि सत्यम्।

(५४) मुनीति। हे सखे! मुनिसुतायाः शकुन्तलायाः प्रणयस्मृतिं रुणद्धीति तथोक्तेन तमसा मोहेन मम इदं मनः मुक्तञ्च त्यक्तञ्च, प्रहरिष्यता मनसिजेन कामेन धनुषि चूतशरः निवेशितश्च योजितश्च। प्रणयस्मरणरूपं रन्ध्रं प्राप्य कामो मां हन्तुं प्रवृत्त इति भावः। अत्र चकारद्वयं यौगपद्यसूचकम्। ततश्च क्रियाद्वयस्य यौगपद्यात् समुच्चयालङ्कारः। तथा च दर्पणम्, समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्। गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये इति। द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात्।

(५५) उपहितेति। अङ्गुलिमुद्रया अङ्गुरीयकचिह्नेन उपहिता जनिता स्मृतिः स्मरणं यस्य तथाभूतः अतएव उत्सुकः उत्कण्ठितः व्याकुल इत्यर्थः अनुशयात् अनुतापात् अनिमित्तनिराकृताम् अकारणपरित्यक्तां प्रियतमां शकुन्तलाम् अनुलक्ष्य उद्दिश्येत्यर्थः रोदिमि च, सुरभिमाससुखं वसन्तागमजनित उल्लास

विदू। भो वअस्स! चिट्ठ दाव जाव इमिणा दण्ड-कट्ठेण कन्दप्पवाणं णासेमि (क)। [इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति]।

राजा। [सस्मितम्]। भवतु दृष्टं ब्रह्मवर्चसं, (५६) सखे! क्व इदानीम् उपविष्टः प्रियायाः किञ्चिदनुकारिणीषु (५७) लतासु दृष्टिं विनोदयामि?

विदू। णं भअदा आसण्णपरिचारिआ (५८) लिविअरी मेहाविणी (५९) आदिट्ठा, माहवीलदाहरए इमं वेलं अदि-वाहिस्सं तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउ-न्तलाए पडिकिदं आणेहित्ति (ख)।

राजा। ईदृशमेव हृदयाश्वासनम्, (६०) तत्तदेवादेशय (६१) माधवीलतागृहम्।

(क) भो वयस्य! तिष्ठ तावत् यावदनेन दण्डकाष्ठेन कन्दर्पवाणं नाशयामि।

(ख) ननु भवता आसन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा माधवी-लतागृहे इमां वेलामतिवाहयिष्यामि तत्र चित्रफलके मे स्वहस्तलिखितां तत्र-भवत्याः शकुन्तलायाः प्रतिकृतिमानयेति।

इत्यर्थः समुपैति च समागतश्च। अत्रापि क्रिययोर्यौगपद्यात् समुच्चयालङ्कारः। द्रुतविलम्बितं वृत्तम्।

(५६) ब्रह्मवर्चसं ब्रह्मतेजः।

(५७) किञ्चिदनुकारिणीषु ईषत् सादृश्यवतीषु।

(५८) आसन्नपरिचारिका सन्निहितसेविका।

(५९) मेधाविनी बुद्धिमती अथवा तदाख्या।

(६०) इदमेव तस्या आलेख्यमेव हृदयस्य आश्वासनं शान्त्युपाय इत्यर्थः।

(६१) आदेशय दर्शय।

विदू । इदो इदो एदु भवं (क) । [इत्युभौ परिक्रामतः ।
मिश्रकेशी । [अनुगच्छति] ।

विदू । एसो मणिसिलावट्टसणाहो माहवीलदामण्डवो विवित्तदाए उवहाररमणीज्जदाए णिसग्गमारुदेण अ साअदेन विअ पड़िच्छदि (६२) तुमं, ता पविसिअ णिसीददु भवं (ख) ।

उभौ । [प्रविश्य उपविष्टौ] ।

मिश्र । लदासंस्सिदा (६३) पेक्खिस्सं दाव पिअसहीए पड़िकिदिं, तदो से भत्तुणो बहुमदं अणुराअं णिवेदइस्सं (ग) । [इति तथा क्रत्वा स्थिता] ।

राजा । [निश्वस्य] सखे ! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तं, यं कथितवानस्मि भवते । स

---

(क) इत इत एतु भवान् ।

(ख) एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया उपहाररमणीयतया निसर्गमारुतेन च स्वागतेनेव प्रतीच्छति त्वां, तत्प्रविश्य निषीदतु भवान् ।

(ग) लतासंश्रिता प्रेक्षिष्ये तावत् प्रियसख्याः प्रतिक्रतिं, ततोऽस्या भर्त्तुर्बहुमतमनुरागं निवेदयिष्यामि ।

---

(६२) विविक्ततया विजनतया । उपहारेण पुष्पगुच्छादिसज्जया रमणीयतया मनोहरतया । निसर्गमारुतेन स्वभाववायुना मन्दपवनेन इत्यर्थः प्रतीच्छति परिगृह्णाति सादरं प्रत्युद्गच्छतीव इत्यर्थः ।

(६३) लतासंश्रिता लताधिष्ठिता ।

भवान् प्रत्यादेशसमये (६४) मत्समीपगतो नासीत्, किन्तु पूर्वमपि न त्वया कदाचित् सङ्कीर्त्तितं तत्रभवत्या नामादिकं, कच्चिदहमिव विस्मृतवांस्त्वमपि ?

मिश्र। अदोज्जेव महीवदिहिं खणम्मि सहिअआओ सहाआओ ण विरहिदव्वाओ (क)। (६५)

विदू। ण विसुमरामि, किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं परिहासविअप्पिओ (६६) एसो ण भूदत्थो (६७) त्ति, मएवि मन्दबुद्धिणा तधा ज्जेव गहिदं (६८) अधवा भविदव्वदा (६९) क्खु एत्थ बलवदी (ख)।

मिश्र। एवस्सेदं (ग)।

राजा। [क्षणं ध्यात्वा]। सखे! परित्रायस्व माम्।

---

(क) अतएव महीपतिभिः क्षणमपि सहृदयाः सहाया न विरहितव्याः।

(ख) न विस्मरामि, किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया भणितं परिहासविकल्पित एषः न भूतार्थ इति, मयापि मन्दबुद्धिना तथैव गृहीतम्, अथवा भवितव्यता खलु अत्र बलवती।

(ग) एवम् इदम्।

---

(६४) प्रत्यादेशसमये परित्यागसमये।

(६५) सहृदयाः सामाजिकाः सुहृदयशालिन इत्यर्थः। सहायाः सखायः। न विरहितव्याः न त्यक्तव्याः।

(६६) परिहासविकल्पितः परिहासेन कथितः।

(६७) भूतार्थः यथार्थः।

(६८) गृहीतं बुद्धम्।

(६९) भवितव्यता अवश्यम्भाविनी दैवगतिरित्यर्थः।

विदू । भो वअस्स ! किं एदं तुह उववस ? (७०) ण कदावि सप्पुरिसा सोअचित्ता होन्ति, णं पवादेवि (७१) णिक्कम्पा ज्जेव गिरिओ (क) ।

राजा । वयस्य ! निराकरणविक्लवायाः (७२) तै सख्यास्तामवस्थामनुस्मृत्य बलवदशरणः (७३) अस्मि । सा हि

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं वाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥ (७४)

मिश्र । अम्महे ! ईदिसो परवसदा इमस्स मम्पि (७५) सन्दावेदि (ख) ।

---

(क) भो वयस्य ! किम् एतत् तव उपपन्नं, न कदापि सत्पुरुषाः शोकचित्ता भवन्ति, ननु प्रवातेऽपि निष्कम्पा एव गिरयः ।

(ख) अहो ! ईदृशी परवशता अस्य मामपि सन्तापयति ।

---

(७०) उपपन्नम् उपस्थितम् ।

(७१) प्रवातेऽपि प्रकृष्टे बलवतीत्यर्थः वाते वायौ अपि वहत्यपि इत्यर्थः ।

(७२) निराकरणविक्लवायाः परित्यागकातरायाः ।

(७३) बलवत् अत्यर्थम् । अशरणः अनाश्रयः । अतिकातर इत्यर्थः ।

(७४) इत इति । इतः अस्मात् स्थानात् मत्तो वा प्रत्यादिष्टा निराकृता सती स्वजनं गौतम्यादिम् अनुगन्तुम् व्यवसिता उद्युक्ता आसीदिति शेषः ततः गुरुसमे गुरुतुल्ये गुरुशिष्ये शार्ङ्गरवे तिष्ठ इति उच्चैर्वदति सति स्थिता दह्यमाना सती क्रूरे निष्ठुरे मयि पुनः यत् वाष्पप्रकरेण अश्रुभरेण कलुषाम् आविलां दृष्टिम् अर्पितवती दत्तवती, तत् हृदयर्पितं सविषं शल्यमिव मां दहति भृशमन्तापयति इत्यर्थः । शिखरिणीवृत्तम् ।

(७५) परवशता अधीरता व्याकुलता इत्यर्थः । मामपि उदासीनामिति भावः ।

विदू । भो ! अत्थि मे तक्को (७६) केण उण तत्थभोदी आआससञ्चारिणा णीदेत्ति ? (क) ।

राजा । वयस्य ! कः पतिव्रतां तामन्यः परामृष्टु- मुत्सहते, (७७) मेनका किल सख्यास्ते जन्मप्रतिष्ठेति (७८) तत्सम्बोजनादस्मि श्रुतवान्, तत्सहचरीभिस्तया वा नीतेति हृदयमाशङ्कते । (७९)

मिश्र । सम्मोहे(८०)वि विम्हअणीओ (८१) क्खु इमस्स पडिबोधो (ख) । (८२)

विदू । भो ! जइ एव्वं ता समस्ससदु भवं, अत्थि क्खु समागमो कालेण तत्थभोदीए (ग) ।

राजा । कथमिव ?

(क) भो ! अस्ति मे तर्कः, केन पुनस्तत्रभवती आकाशसञ्चारिणा नीतेति ।

(ख) सम्मोहेऽपि विस्मयनीयः खलु अस्य प्रतिबोधः ।

(ग) भो ! यद्येवं तत् समाश्वसितु भवान्, अस्ति खलु समागमः कालेन तत्रभवत्याः ।

(७६) तर्कः प्रश्नकुतूहलम् ।

(७७) परामर्ष्टुम् स्प्रष्टुम् । उत्सहते प्रभवति ।

(७८) जन्मप्रतिष्ठा उत्पत्तिस्थानं जननीत्यर्थः ।

(७९) आशङ्कते मन्यते ।

(८०) सम्मोहे सम्यक् मुग्धदशायाम् ।

(८१) विस्मयनीयः चमत्करणीयः ।

(८२) प्रतिबोधः ज्ञानम् ।

विदू। ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति (क)।

राजा। वयस्य !

स्वप्नो नु माया नु मतिभ्रमो नु क्लृप्तं नु तावत् फलमेव पुण्यैः।
असन्निवृत्त्यै तदतीतमेव मनोरथानामतटप्रपातः॥ (८३)

विदू। भो ! मा एव्वं, अङ्गुलीअअं ज्जेव एत्थ णिदंसणं, अवस्सम्भाविणो अचिन्तणीअसमागमा (८४) हान्ति(ख)।

---

(क) न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः।

(ख) भो ! मैवं, ननु अङ्गुलीयकमेव अत्र निदर्शनम्। अवश्यम्भाविनोऽचिन्तनीयसमागमा भवन्ति।

---

(८३) स्वप्न इति। नुशब्दः वितर्कव्यञ्जकः। तत् शकुन्तलासमागमरूपं वस्त्वित्यर्थः स्वप्नः निद्रावस्थायां विषयानुभवः नु, स्वप्नो निद्राम् उपेतस्य विषयानुभवस्तु य इति साहित्यदर्पणम्। माया नु ऐन्द्रजालिकव्यापारः किम् ? मतिभ्रमः नु बुद्धेर्भ्रमविलासः किम् ? पुण्यैः मदीयशुभादृष्टैः तावत् तत्परिमितमेव तत्परिमितकालभोग्यमेव न तु ततोऽधिककालभोग्यमिति भावः फलं क्लृप्तं नु जनितं किम् ? असन्निवृत्त्यै अपुनरावर्त्तये अतीतमेव गतमेव न पुनः कथमपि लभ्यते इति भावः। तदतीव मन्ये इति पाठे अतीव अत्यर्थमेव असन्निवृत्त्यै अपुनरावर्त्तये मन्ये न पुनरावर्त्तते इति निश्चिनोमि इत्यर्थः। मनोरथानां तद्गताभिलाषाणाम् अतटात् भृगोः प्रपातस्त्वतटो भृगुरित्यमरः पर्वतीयोच्चस्थानादित्यर्थः प्रपातः प्रकर्षेण अधःपतनं यथा पर्वतादुच्चात् पतिता एव म्रियन्ते तथा शकुन्तलाविषया मम मनोरथाः विनष्टा इति भावः। असन्निवृत्त्या तदतीव मन्ये मनोरथानाम् अतटप्रपातमिति पाठे असन्निवृत्त्या अपुनरावृत्तिहेतोः तत् शकुन्तलासमागमवस्तु मनोरथानाम् अभिलाषाणाम् अतटप्रपातं पर्वतोच्चदेशात् प्रपातो यस्य तादृशं विनष्टमिति यावत् मन्ये इत्यर्थः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजाति वृत्तम्।

(८४) अचिन्तनीयसमागमाः अचिन्तनीयः अवितर्कनीयः आकस्मिक इत्यर्थः समागमो येषां तथाभूताः।

राजा। [अङ्गुरीयकं विलोक्य।] अये! इदं तदसुलभस्थानभ्रंशि शोचनीयम्। (८५)

तव सुचरितमङ्गुलीय! नूनं
प्रतनु क्षीणेन विभाव्यते फलेन।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु॥ (८६)

मिश्र। जइ अण्णहत्थगदं भवे तदो सच्चं सोअणीअं भवे, सहि! दूरे वट्टसि एआइणी ज्जेव कण्णसुहाइं अणुभवेमि (क)।

विद। भो! इअं णाम मुद्दा (८७) केण उद्देसेण (८८) भवदा तत्थभोदीए हत्थसंसग्गं पाविदा? (ख)।

---

(क) यदि अन्यहस्तगतं भवेत्तदा सत्यं शोचनीयं भवेत्। सखि! दूरे वर्त्तसे एकाकिन्येव कर्णसुखानि अनुभवामि।

(ख) भो! इयं नाम मुद्रा केनोद्देशेन भवता तत्रभवत्या हस्तसंसर्गं प्रापिता?

---

(८५) तदसुलभस्थानभ्रंशि तदेव असुलभं दुर्लभं स्थानं शकुन्तलाया अङ्गुलिरित्यर्थः तस्मात् भ्रश्यतीति तथोक्तम् अतएव शोचनीयं शोकविषयः।

(८६) तवेति। हे अङ्गुलीय! क्षीणेन अल्पेन फलेन तव सुचरितं पुण्यं प्रतनु अत्यल्पं विभाव्यते अनुमीयते नूनम् उत्प्रेक्षे। मन्ये शङ्के ध्रुवं प्रायो नूनम् इत्येवम् आदयः। उत्प्रेक्षाव्यञ्जकाः शब्दा इव शब्दोऽपि तादृश इति दर्पणः। यत् यस्मात् अरुणैः नखैः मनोहरासु तस्याः शकुन्तलायाः अङ्गुलीषु लब्धपदं प्राप्तावकाशं सत् च्युतमसि भ्रष्टमसि। पुष्पिताग्रावृत्तम्, अयुजि न युगरेफतो यकारो युजि तु न जौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्।

(८७) मुद्रा नामाङ्कितम् अङ्गुरीयकम् इत्यर्थः।

(८८) उद्देशेन प्रसङ्गेन।

मिश्र । ममवि कोटुहलेण वावारिदो (८९) एसो (क) ।

राजा । वयस्य ! श्रूयताम् । यदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सवाष्पमाह स्म कियच्चिरेणार्य्यपुत्र: पुनरस्माकं स्मरिष्यतीति ।

विदू । तदो तदो ? (ख) ।

राजा । तदा एनां मुद्रामङ्गुल्या निवेशयता मया प्रत्यभिहिता । (९०)

विदू । किं त्ति ? (ग) ।

राजा । एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत् प्रिये ! मदवरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति ॥ (९१)

(क) ममापि कौतूहलेन व्यापारित एष: ।

(ख) ततस्तत: ?

(ग) किमिति ?

(८९) व्यापारित: पृष्ट: ।

(९०) प्रत्यभिहिता प्रत्युक्ता ।

(९१) एकैकमिति । अत्र तपोवने स्थितेति शेष: दिवसे दिवसे प्रतिदिनम् एकैकं मदीयं नामाक्षर दुष्मन्तेति वर्णत्रयं गणय, यावत् अन्तं समाप्तिं गच्छसि प्राप्नोषि, तावत् तस्मिन् दिने तृतीये दिवसे इति भाव: मम अवरोधस्य अन्त:पुरस्य निर्देशे आज्ञायां वर्त्तते य: स: आज्ञाकर: अन्त:पुरभृत्य इत्यर्थ: जन: तव नेता नयनार्थमिति भाव: समीपम् उपैष्यति आगमिष्यति इति प्रत्यभिहितत्वेनान्वय: । वसन्ततिलकं वृत्तम् ।

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् (९२)

मिश्र । रमणीओ क्खु अवही विहिणा विसंवादिदो (ख) । (९३)

विदू । भो ! कधं लोहिदमच्छस्स वड्डिसं विअ मुहप्पविट्ठं एदं आसी ? (ग) ।

राजा । शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद् गङ्गास्रोतसि परिभ्रष्टम् ।

विदू । जुज्जदि (क) ।

मिश्र । अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो इमस्स राएसिणो परिणए सन्देहो जादो, अधवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि, ता कधंविअ एदं ? (ख) ।

राजा । उपालप्स्ये (९४) तावदिदमङ्गुरीयकम् ।

विदू । [सस्मितम् ।] भो ! अहंपि दाव एदं दण्डकट्ठं उवालहिस्सं कधं उजुअस्स मे कुडिलं तुमं त्ति (ग) ।

---

(क) रमणीयः खलु अवधिर्विधिना विसंवादितः । ---

(ख) भोः ! कथं रोहितमत्स्यस्य वड़िशमिव मुखप्रविष्टमेतदासीत् ?

(ग) युज्यते ।

(घ) अतः खलु तपस्विन्याः शकुन्तलाया अधर्म्मभीरोरस्य राजर्षेः परिणये सन्देहो जातः, अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते तत् कथमिवैतत् ?

(ङ) भो ! अहमपि तावदेतत् दण्डकाष्ठमुपालप्स्ये कथमृजुकस्य मे कुटिलं त्वमसीति ।

---

(९२) मोहात् अस्मरणादित्यर्थः ।

(९३) विसंवादितः विपर्यासितः ।

(९४) उपालप्स्ये तिरस्करिष्यामि ।

राजा। [तत् अश्रुत्वैव।]

कथं नु तं कोमलवन्धुराङ्गुलिं

करं विहायासि निमग्नमम्भसि ?।

अथवा अचेतनं नाम गुणं न वीक्षते,

मयैव कस्मादवधीरिता प्रिया ? ॥ (९५)

मिश्र। सअं ज्जेव पडिवण्णो (९६) जं अह्मि वत्तु-

कामा (क)।

विदू। भो सव्वधा अहं वुभुक्खाए मारिदव्वो (ख)।

राजा। [अनादृत्य।] प्रिये! अकारणपरित्यागादनुशय-

दग्धहृदय(९७)स्तावदनुकम्प्यता(९८)मयं जनः पुनर्दर्शनेन।

---

(क) स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा।

(ख) भोः! सर्वथाहं वुभुक्षया मारयितव्यः।

---

(९५) कथमिति। हे अङ्गुरीय! तं कोमलाः मृदुलाः वन्धुराः उन्नतानता अङ्गुलयो यस्य तथोक्तं करं हस्तं विहाय त्यक्त्वा कथम् अम्भसि सलिले निमग्नं पतितम् असि। अचेतनं चैतन्यरहितं वस्तु गुणं न वीक्षते न पश्यति नाम सम्भावनायाम् अचेतनस्य गुणागुणदर्शनसामर्थ्यं न सम्भाव्यते इति भावः मया एव चेतनेन अपीति भावः कस्मात् प्रिया शकुन्तला अवधीरिता परित्यक्ता। वंशस्थविलं वृत्तम्।

(९६) प्रतिपन्नः उक्तवानित्यर्थः।

(९७) अनुशयदग्धहृदयः अनुशयेन अनुतापेन दग्धं हृदयं यस्य तथाभूतः।

(९८) अनुकम्प्यताम् अनुगृह्यताम्।

[प्रविश्य चित्रफलकहस्ता चेटी ।] भट्टा ! इअं चित्तगदा भट्टिणी (क) [इति चित्रफलकं दर्शयति ।]

राजा । [विलोक्य ।] अहो ! रूपमालेख्यगताया (९९) अपि प्रियायाः । तथाहि

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धु द्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥ (१००)

विदू । [विलोक्य ।] साहु वअस्स ! साहु, जं तुए महुरो भट्टिणीए दंसिदो भावाणुप्पवेसो, खलदि विअ (१०१) मे

---

(क) भर्त्तः ! इयं चित्रगता भट्टिनी ।

(९९) आलेख्यगतायाश्चित्रालिखितायाः ।

(१००) दीर्घेति । दीर्घयोः विशालयोः अपाङ्गयोः प्रान्तयोः विसारि विसारि नेत्रयुगलं यस्य तथोक्तं लीलया विलासेन अञ्चिते आखिते भ्रुवौ लते इव यस्य तादृशं दन्तानाम् अन्तर्मध्ये परिकीर्णाभिः परितः प्रसृताभिः हासस्य किरणा एव ज्योत्स्नास्ताभिः विलिप्तः व्याप्तः अधरो यस्य तथाभूतं कर्कन्धोः पक्वबदरीफलस्येव द्युतिः कान्तिर्यस्य तथोक्तः अतएव पाटलः रक्तः य ओष्ठः तेन रुचिरं मनोज्ञम् । तथा विभ्रमेण विलासविशेषेण लसन् स्फुरन् प्रोद्भिन्नः प्रकर्षेण उन्मीलितः कान्तिद्रवः लावण्यरसः यत्र तथाविधं तस्याः प्रियायाः तत् एतत् मुखं चित्रेऽपि आलेख्ये अपि आलपतीव सम्भाषत इव । शार्दूलविक्रीडितं वृत्तम् ।

(१०१) दर्शितः प्रकटितः । भावानुप्रवेशः प्रणयानुबन्धः । स्खलतीव निपतति इव दर्शनेन्द्रियस्य अवसरेऽन्यत्र न गच्छतीति भावः ।

दिट्ठी णिहुदप्पदेसेसुं (१०२) किं बहुणा सत्ताणुप्पवेससङ्काए आलवणकोदूहलं (१०३) मे जणअदि (क)। (१०४)

मिश्र। अह्नो! एसा राएसिणो वत्तिआलेहाणिउणदा (१०५) जाणे पिअसही मे अग्गदो वट्टदित्ति (ख)।

राजा। यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं लेखया किञ्चिदन्वितम्॥ (१०६)

---

(क) साधु वयस्य! साधु, यत्त्वया मधुरो भङ्गिन्या दर्शितो भावानुप्रवेशः, स्खलतीव मे दृष्टिर्निम्नतप्रदेशेषु, किं बहुना सत्त्वानुप्रवेशशङ्कया आलपनकौतूहलं मे जनयति।

(ख) अहो एषा राजर्षेर्वर्त्तिकालेखानिपुणता, जाने प्रियसखी मे अग्रतो वर्त्तत इति।

---

(१०२) निम्नतप्रदेशेषु गुप्तावयवेषु स्तनादिषु इति भावः।

(१०३) सत्त्वानुप्रवेशशङ्कया सत्त्वस्य जीवनस्य अनुप्रवेशशङ्कया समावेशसंभ्रमेन। आलपनकौतूहलम् आलपने सम्भाषणे कौतूहलम् औत्सुक्यम्।

(१०४) जनयति उत्पादयति। सजीवामिव एनां मत्वा आलपितुमिच्छामि इवेति भावः।

(१०५) वर्त्तिकालेखानिपुणता वर्त्तिकया तूलिकया या लेखा चित्रकर्म तत्र निपुणता पाटवम्।

(१०६) यदिति। चित्रे आलेख्यकर्मणि यत् यत् साधु उत्कृष्टं न स्यात्, तत्तत् असाधु रूपमिति शेषः अन्यथा क्रियते सुष्ठु क्रियते चित्रकरैरिति कर्त्तृपदमध्याहार्य्यं चित्रे स्यादित्यत्र चित्रेऽस्मिन्निति पाठे अस्मिन् चित्रे यत् यत् साधु उत्कृष्टं न भूतमिति तत्तत् अन्यथा साध्वित्यर्थः क्रियते मयेति शेषः तथापि उत्कर्षकरणेऽपि तस्याः शकुन्तलाया लावण्यं लेखया लेशत इत्यर्थः किञ्चित् ईषत् अन्वितं युक्तं न तु कथमपि सम्यक् स्यादिति शेषः। पथ्यावक्त्रं वृत्तम्।

तथाहि

अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता,

दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।

अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं,

प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम् ॥ (१०७)

मिश्र । सरिसं (१०८) एव्वं पच्चादावगुरुणो सिणे-हस्स (क) ।

राजा । [ निश्वस्य ]

साक्षात् प्रियामुपगतामपहाय पूर्वं

चित्रार्पितामहमिमां बहु मन्यमानः ।

स्रोतोवहां पथि निकामजलामतीत्य

जातः सखे ! प्रणयवान् मृगतृष्णिकायाम् ॥ (१०९)

(क) सदृशमेव पश्चात्तापगुरोः स्नेहस्य ।

---

(१०७) अस्या इति । अस्याः चित्रस्थायाः प्रियायाः इदं स्तनद्वयं तुङ्गमिव उन्नतमिव न तु वास्तवमुन्नतमित्यर्थः । नाभिः निम्नेव नतेव न तु तत्त्वतः निम्नेत्यर्थः नाभिः स्थिता । समायामपि भित्तौ चित्रफलके इत्यर्थः सर्वत्र योज्यमिदम् । वलयः त्रिवल्यः विषमोन्नताश्च विषमा असमा उन्नताश्च दृश्यन्ते लक्ष्यन्ते न तु तत्त्वत इति भावः । अङ्गे अवयवे इदं मार्दवं सौकुमार्यं स्निग्धप्रभावात् तैलविशेषरञ्जनसामर्थ्यादित्यर्थः चिरं दीर्घकालं प्रतिभाति स्फुरति च । प्रेम्णा प्रणयेन मम मुखम् ईक्षते इव पश्यतीव तथा स्मेरा मृदुहासा सती मां वक्तीव आलपतीव च । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

(१०८) सदृशं युक्तम् अनुरूपमित्यर्थः ।

(१०९) साक्षादिति । हे सखे ! अहं पूर्वं प्राक् साक्षात् स्वयम् उपगताम् उपस्थितां प्रियाम् अपहाय परित्यज्य चित्रार्पिताम् आलेख्यगताम् इमां प्रियां

विदू । भो ! तिस्सिस्सा आइदिओ दीसन्ति सव्वाओ ज्जेव दंसणीआओ, ता कदमा एत्थ तत्थभोदी सउन्तला ? (क) ।

मिश्र । अणहिण्णो क्खु एसो मणोए रूवस्स मोहचक्खू (११०) इअं क्खु णा से गदा पच्चक्खदं (ख) ।

राजा । त्वं तावत् कतमां तर्कयसि ? (१११)

विदू । [निर्वर्ण्य ।] तक्केमि जा एसा सिढ़िलबन्धणुव्वन्त कुसुमेण केसहत्थेण उडस्सेअविन्दुणा वअणेण विसेसदो णामिदमाहाहिं बाहुलदाहिं उस्सासिदणीविणा वसणेण अ ईसीपरिस्सन्ता विअ अहिसेअसिणिद्धदरपल्लवस्स बालचूअ

(क) भोः तिस्र आकृतयो दृश्यन्ते, सर्वा एव दर्शनीयाः, तत् कतमा अत्र तत्रभवती शकुन्तला ?

(ख) अनभिज्ञः खलु एष सखीरूपस्य मोघचक्षुः, इयं खलु नास्य गता प्रत्यक्षताम् ।

---

वह मन्यमानः आद्रियमाणः सन् पथि मार्गे निकामजलां प्रभूतसलिलां स्रोतोवहां नदीम् अतीत्य अतिक्रम्य मृगतृष्णिकायां मरीचिकायाम् मृगतृष्णा मरीचिका इत्य- मरः प्रणयवान् समासक्तः इति यावत् जातः संवृत्तः । अत्र चित्रगतायां प्रियायाम् आसक्तिः मृगतृष्णिकायाम् आसक्तिरिव इति बिम्बप्रतिबिम्बभावेन पर्यवसानात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना तथा च दर्पणः । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । वसन्ततिलकं वृत्तम् ।

(११०) मोघचक्षुः विफलनयनः ।

(१११) तर्कयसि मन्यसे ।

क्खअस्स (११२) पास्से आलिहिदा एसा तत्थभोदी सउ-न्तला, इदराओ सहीओत्ति (क)।

राजा। निपुणो (११३) भवान्, अस्त्यत्र (११४) ममापि भावचिह्नम्। (११५)

स्विन्नाङ्गुलिविनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णिकोच्छ्वासात्॥ (११६)

---

(क) तर्कयामि यथा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन बद्धस्वेदबिन्दुना वदनेन विशेषतो नामितशाखाभ्यां बाहुलताभ्याम् उच्छ्वसितनीविना वसनेन च ईषत्परिश्रान्तेव आभिषेकास्निग्धतरपल्लवस्य बालचूततरुकस्य पार्श्वे आलिखिता एषा तत्रभवती शकुन्तला, इतरे: सख्यौ इति।

---

(११२) शिथिलेति। शिथिलेन श्लथीभूतेन बन्धनेन हेतुना उद्वान्तानि पतान्ति कुसुमानि यस्मात् तथाविधेन केशहस्तेन केशकलापेन बद्धाः जाताः स्वेद-बिन्दवः घर्मकणिकाः यत्र तादृशेन वदनेन उपलक्षणे तृतीया विशेषतः विशेषेण नामिता शाखा याभ्यां तथाविधाभ्यां बाहुलतिकाभ्यां भुजलताभ्याम् उपलक्षणे तृतीया। उच्छ्वसितः ईषत् स्खलितः नीविः वसनग्रन्थिर्यस्य तादृशेन वसनेन वस्त्रेण उपलक्षणे तृतीया। ईषत् किञ्चित् परिश्रान्तेव श्रमार्त्तेव। आभिषेकेण जलसेचनेन स्निग्धतराः सुकुमारतराः पल्लवा यस्य तथाविधस्य बालचूततरुकस्य नवीनाम्रतरोः।

(११३) निपुणः अभिज्ञः।

(११४) अत्र चित्रमय्यां प्रियायाम्।

(११५) भावचिह्नं भावस्य सात्त्विकलक्षणस्य चिह्नं स्वेदादिकम्।

(११६) स्विन्नेति। स्विन्नायाः स्वेदार्द्रायाः अङ्गुलेः विनिवेशात् स्पर्शात् प्रान्तेषु पार्श्वदेशेषु मलिना श्यामा रेखा दृश्यते लक्ष्यते। तथा वर्णिकायाः रञ्जनद्रव्यस्य उच्छ्वासात् विलोपात् कपोलाभ्यां गण्डाभ्यां चित्रकर्मसमये ममेति शेषः पतितं स्खलितम् अश्रु नेत्रजलञ्च इदं लक्ष्यम् अनुमेयम्; आर्या जातिः।

[चेटीं प्रति ।] चतुरिके ! अर्द्धलिखितमेतद्विनोदस्थानमस्माभिः, तद्गच्छ वर्त्तिका (११७) स्तावदानय ।

चेटी । अज्ज माढव्व ! अवलम्ब चित्तफलअं जाव गच्छह्म (क) ।

राजा । अहमेवालम्बे । [इति यथोक्तं करोति । ]

चेटी । [ निष्क्रान्ता । ]

विदू । भो ! किं एत्थ अवरं आलिहिदव्वं ? (ख) ।

मिश्र । जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामोत्ति तक्केमि (ग) ।

राजा । सखे ! श्रूयताम्

कार्य्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ (११८)

(क) आर्य्य माधव्य ! अवलम्बस्व चित्रफलकं यावद्गच्छामः ।

(ख) भोः किमत्र अपरमालिखितव्यम् ?

(ग) यो यः प्रियसख्या अभिमतः प्रदेशस्तं तमालिखितुकाम इति तर्कयामि ।

(११७) वर्त्तिकाः तूलिकाः ।

(११८) कार्य्येति । सैकतेषु पुलिनेषु तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्यमरः । लीनानि सङ्गतानि हंसमिथुनानि हंसानां द्वन्द्वानि यस्याः तथोक्ता सैकतिनी सहंसमिथुनेति पाठे सैकतिनी पुलिनवती तथा सहंसमिथुना हंसद्वन्द्वसमन्वितेत्यर्थः । मालिनी नाम स्रोतोवहा स्रोतस्वती कार्य्या आलेख्या । तां मालिनीम् अभितः मालिन्याः तटेषु इत्यर्थः निषण्णाः स्थिताश्चमराः मृगविशेषा येषु तथोक्ताः पावनाः पवित्रा गौरीगुरोः हिमालयस्य पादाः प्रत्यन्तशैलाः कार्या

विदू । [स्वगतम् ।] जधा मन्तेदि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिहिं लम्बकुच्चाणं (११९) वक्कल परिहाणाणं तावसाणंत्ति (क) ।

राजा । वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं (१२०) लेखितुं विस्मृतमस्माभिः ।

विदू । किं विअ ? (ख) ।

मिश्र । वणवासस्स कस्सआभावस्स अ जं सरिसं भविस्सदि (ग) ।

राजा । कृतं न कर्णार्पितबन्धनं सखे !

शिरीषमागण्डविलम्बिकेशरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ (१२१)

---

(क) यथा मन्त्रयति तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिः लम्बकूर्चानां वल्कलपरिधानानां तापसानामिति ।

(ख) किमिव ?

(ग) वनवासस्य कन्यकाभावस्य च यत् सदृशं भविष्यति ।

---

इति शेषः । तथा शाखासु लम्बितानि वल्कलानि यस्य तथाभूतस्य तरोः वृक्षस्य अधः तले इत्यर्थः कृष्णमृगस्य कृष्णसारस्य शृङ्गे वामनयनं वामं सुन्दरं नयनं कण्डूयमानां मृगीं निर्मातुं चित्रयितुम् इच्छामि । शार्दूलविक्रीडितं वृत्तम् ।

(११९) लम्बकूर्चानां दीर्घश्मश्रूणाम् ।

(१२०) प्रसाधनम् अलङ्कारः । अभिप्रेतम् अभिमतम् ।

(१२१) कृतमिति । हे सखे ! कर्णयोः अर्पितं दत्तं परिहितमित्यर्थः बन्धनं सूत्रग्रन्थिः यस्य तादृशं तथा आगण्डम् आकपोलं विलम्बिनः लम्बमानाः केशराः किञ्जल्काः यस्य तथोक्तं शिरीषं शिरीषकुसुमं न कृतं न चित्रितं तथा

विदू। किस्मु क्खु तत्थभोदी रत्तकुवलअसोहिणा (१२२) अग्गहत्थेण मुहं आवारिअ अकिदचकिदा (१२३) विअ ठिदा? [सावधानम् (१२४) दृष्ट्वा]। आ ही ही (१२५) भो! एसो दासीए पुत्तो कुसुमरसपाडच्चरो (१२६) दुट्टमहुअरो तत्थभोदीए वअणकमलं अहिलसदि (क)।

राजा। ननु वार्य्यतामेष धृष्टः। (१२७)

विदू। भो! तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि (ख)।

राजा। युज्यते। अयि भोः कुसुमलताप्रियातिथे! किमत्र परिपतनखेदमनुभवसि?

(क) किं नु खलु तत्रभवती रक्तकुवलयशोभिना अग्रहस्तेन मुखमावार्य्य चकितचकितेव स्थिता? आ ही ही भो! एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभवत्या वदनकमलमभिलषति।

(ख) भोः त्वमेव अविनीतानां शास्ता अस्य वारणे प्रभवसि।

---

तानयोरन्तरे मध्ये शरचन्द्रस्य मरीचिवत् कोमलं सुकुमारं मृणालं न वा रचितं नैव चिन्तितम्। बंशस्थविलं वृत्तम्।

(१२२) रक्तकुवलयशोभिना रक्तोत्पलवत् शोभमानेन।

(१२३) आवार्य्य आच्छाद्य। चकितचकिता भीतभीता।

(१२४) सावधानं साभिनिवेशम्।

(१२५) ही ही इति आश्चर्य्यव्यञ्जकम् अव्ययम्।

(१२६) कुसुमरसपाटच्चरः पुष्पमधुचौरः।

(१२७) वार्य्यतां ताड्यताम्। धृष्टः चपलः।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति॥ (१२८

मिश्र । अदिमत्थं क्खु वारिदो (क) ।

विदू । भो ! पड़िसिद्धवामा(१२९) क्खु एसा जादी (ख)।

राजा । [सकोपम्]। भो ! न मे शासने तिष्ठसि, श्रूयतां तर्हि, सम्प्रति हि

अक्लिष्टबालतरुपल्लवलोभनीय
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद् भ्रमर ! प्रियायाः
त्वां कारयामि कमलोदरबन्धनस्थम् ॥ (१३०)

विदू । भो एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि ।

(क) अत्यर्थं खलु वारितः ।

(ख) भोः प्रतिषिद्धवामा खलु एषा जातिः ।

(१२८) एषेति । एषा कुसुमे निषण्णा उपविष्टा अनुरक्ता त्वयि अनुरागिणी अतएव सती साध्वी मधुकरी तृषितापि पिपासितापि भवन्तं त्वां प्रतिपालयति प्रतीक्षते । त्वां विना न खलु नैव मधु पिबति ।

(१२९) प्रतिषिद्धवामा निवारितापि प्रतिकूला ।

(१३०) अक्लिष्टेति । हे भ्रमर ! मया रतोत्सवेषु सुरतोत्सवेषु सदयमेव पीतं चुम्बितमित्यर्थः अक्लिष्टः अम्लानः यः बालतरोः अभिनववृक्षस्य पल्लवः तद्वत् लोभनीयः तं प्रियायाः बिम्बमिव अधरः तं चेत् यदि दशसि दंशनक्षतं करोषि तदा त्वां कमलस्य उदरम् अभ्यन्तरमेव बन्धनं कारा तत्स्थं तत्र बद्धमित्यर्थः कारयामि उपमालङ्कारः । वसन्ततिलकं वृत्तम् ।

[विहस्यात्मगतम्] । एसो दाव उम्मत्तो, अहम्मि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो (क) ।

राजा । निवार्य्यमाणोऽपि कथं स्थित एव ।

मिश्र । अह्मो ! धीरंपि जणं रसो विआरेदि (ख) । (१३१)

विदू । [प्रकाशम्] । भो ! चित्तं क्खु, एदं (ग) ।

राजा । कथं चित्रम् ?

मिश्र । अहम्मि दाणिं अवगदत्था (१३२) किं उण जधा चिन्तिदाणुसारी (१३३) एसो (घ) ।

राजा । किम् इदम् अनुष्ठितं पौरोभाग्यम् ? (१३४)

(क) भो एवं तीक्ष्णादरस्य ते कथं न भेष्यति । एष तावदुन्मत्तः, अहमपि एतस्य सङ्गेन ईदृश एव संवृत्तः ।

(ख) अहो ! धीरमपि जनं रसो विकारयति ।

(ग) भोः चित्रं खलु इदम् ।

(घ) अहमपि इदानीम् अवगतार्था, किं पुनः यथाचिन्तितानुसारी एषः ।

(१३१) रसः प्रवास विप्रलम्भाख्यः शृङ्गारः । विकारयति विकृतं करोति ।

(१३२) अवगतार्था ज्ञातार्था इतःपूर्वं मे वास्तवमेव ज्ञानं जातम् अधुना भ्रमो निराकृत इति भावः ।

(१३३) यथाचिन्तितानुसारी यथाचिन्तितं यादृशं मनसा कल्पितं तत्त्वत एव तदनुसारीत्यर्थः ।

(१३४) पौरोभाग्यं दोषैकदर्शित्वम् अनुष्ठितमाचरितम् । चित्रशकुन्तला याथात्म्यकल्पनिराकरणरूपं सदोषकर्मानुष्ठानमित्यर्थः ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ (१२५)
[इति वाष्पं विसृजति]।

मिश्र । पुव्वापरविरुद्धो अपुव्वो (१२६) एष विरहिमग्गो (क) ।

राजा । वयस्य ! कथमेवमविश्रामं दुःखमनुभवामि ?।
प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ (१२७)

मिश्र । सव्वधा पमज्जिदं तुए पच्चादेसदुक्खं (१२८)

(क) पूर्वापरविरुद्धोऽपूर्व एष विरहिमार्गः ।

---

(१२५) दर्शनेति । तन्मयेन शकुन्तलामयेन हृदयेन मनसा साक्षात् प्रत्यक्षमिव दर्शनसुखं प्रियावलोकनानन्दम् अनुभवतः मे मम स्मृतिकारिणा चित्रस्मारकेण त्वया पुनरपि कान्ता प्रिया चित्रीकृता चित्रलिखितेति ज्ञानविषयिणीकृतेत्यर्थः । आर्य्याजातिः ।

(१२६) पूर्वापरविरुद्धः पूर्वं सहसा प्रत्याख्यानम् अपरं तदर्थः शोकातिशय इति विरुद्धः विपरीतः । अथवा पूर्वं तत्त्वतः चित्रज्ञानं ततः सत्यतया भ्रमः ततश्च भ्रमनिरासे शोचनमिति पूर्वापर्य्यविसंवादीत्यर्थः । अपूर्वः नूतनः विचित्रो वा ।

(१२७) प्रजागरादिति । प्रजागरात् प्रकर्षेण निद्राराहित्यात् तस्याः कान्तायाः स्वप्नसमागमः निद्रावस्थायां सङ्गमः खिलीभूतः रुद्धः । वाष्पस्तु अश्रुवारि तु चित्रगतामपि एनां कान्तां द्रष्टुं न ददाति । पथ्यावक्त्रं वृत्तम् ।

(१२८) प्रमार्जितं क्षालितम् । प्रत्यादेशदुःखं परित्यागक्लेशः ।

पिअसहीए पच्चक्खं ज्जेव सहीजणस्स (क) ।

चतुरिका । [प्रविश्य] । जेदु जेदु भट्टा, वत्तिआकरण्डअं (१३९) गेह्णिअ इदो अहं पत्थिदह्मि (ख) ।

राजा । ततः किम् ?

चेटी । तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए (१४०) अहं ज्जेव अज्जउत्तस्स उवणइस्सं (१४१) त्ति भणिअ सबलक्कारं गहीदं (ग) ।

विदू । तुमं कधं विमुक्का ? (घ) । (१४२)

चेटी । जाव देवीए लदाविड़वलग्गं उत्तरीअञ्चलं पिङ्गलिआ मोआवेदि दाव णिह्नविदो (१४३) मए अप्पा (ङ) ।

(क) सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य ।

(ख) जयति जयति भर्त्ता । वर्त्तिकाकरण्डकं गृहीत्वा इतोऽहं प्रस्थितास्मि ।

(ग) तन्मे हस्तात् पिङ्गलिकावेदितया देव्या वसुमत्या अहमेव आर्य्यपुत्रस्य उपनेष्यामि इति भणित्वा सबलात्कारं गृहीतम् ।

(घ) त्वं कथं विमुक्ता ?

(ङ) यावद्देव्या लताविटपलग्नम् उत्तरीयाञ्चलं पिङ्गलिका मोचयति तावत् निह्नुतो मयात्मा ।

---

(१३९) वर्त्तिकाकरण्डकं तूलिकानिधानपेटकम् ।

(१४०) पिङ्गलिकावेदितया पिङ्गलिका नाम काचित् चेटी तया आवेदितया ज्ञापितया वसुमत्या तदाख्यया राजमहिष्या ।

(१४१) उपनेष्यामि सन्निधिं प्रापयिष्यामि ।

(१४२) विमुक्ता परित्यक्ता ।

(१४३) निह्नुतः अपलापितः पलाय्य रक्षितः इति भावः ।

राजा। वयस्य! उपस्थिता देवी बहुमानगर्विता च तद्भवान् इमां प्रतिकृतिं रक्षतु।

विदू। अत्ताणम्पि किंत्ति ण भणासि (१४४) [चित्र-फलकमादायोत्थाय च]। जइ भवं अन्तेउरकूड़वागुरादो मुच्चिस्सदि तदो मं मेहच्छसप्पासादे सद्दाविस्सदि (१४४) एदञ्च तहिं गोबाएमि जहिं पारावदं उज्झिअ अस्सो कोबि ण पेक्खिस्सदि (क)। [इति द्रुतपदं निष्क्रान्तः]।

मिश्र। अह्नो! अस्ससंकन्तहिअओवि पढ़मसम्भावणं(१४६ रक्खदि थिरसोहिदो (१४७) दाव एसो (ख)।

---

(क) आत्मानमपि किमिति न भणसि? यदि भवान् अन्तःपुरकूटवागुरातो मोक्ष्यते तदा मां मेघच्छन्नप्रासादे शब्दायिष्यते, इदञ्च तत्र गोपायामि यत्र पारावतमुज्झित्वा अन्यः कोऽपि न प्रेक्षिष्यते।

(ख) अहो! अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनं रक्षति स्थिरसौहृदस्तावत् एषः।

(१४४) आत्मानमपि रक्षितेति शेषः इति किमिति कथं न भणसि न कथयसि।

(१४५) अन्तःपुरकूटवागुरातः अन्तःपुरम् अन्तःपुरवर्त्तिनी स्त्री तस्याः कूटं माया तदेव वागुरा बन्धनजालं यद्यपि वागुराशब्दः मृगबन्धनजालमात्रवाची तथापि अत्र सामान्यबन्धनजालं बोधयतीति बोध्यम्। मोक्ष्यते मुक्तिं परित्राणम् इत्यर्थः प्राप्स्यति, मेघच्छन्नप्रासादे मेघच्छन्नो नाम प्रासादः राजसदनविशेषः तत्र। तस्य च मेघच्छन्नतया गोपनस्थानत्वं सूचितम्। मेघैरिव छन्नः मेघच्छन्नः मेघच्छन्नवत् निर्मित इति तस्य मेघच्छन्नसंज्ञेति भावः। शब्दायिष्यते आकारयिष्यति।

(१४६) अन्यसंक्रान्तहृदयः अन्यस्यां कान्तायां अनुरक्तायामिति भावः संक्रान्तं स्थितं हृदयं यस्य तादृशः। प्रथमसम्भावनं पूर्वप्रणयं पूर्वस्त्रीप्रेमेत्यर्थः।

[प्रविश्य पत्रहस्ता प्रतीहारी]। जेदु जेदु देवो (क)।

राजा। वेत्रवति! न खलु अन्तरे (१४८) त्वया दृष्टा देवी?

प्रती। देव! दिट्ठा, पत्तहत्थं मं पेक्खिअ पडिणिउत्ता (ख)।

राजा। कार्य्यज्ञा देवी कार्य्योपरोधम् (१४९) मे परिहरति।

प्रती। देव! अमच्चो विसवेदि अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं, तं देवो पत्तारोविदं पच्चक्खीकरेदुत्ति (ग)।

राजा। इतः पत्रं दर्शय।

प्रती। [उपनयति।]

राजा। [वाचयति]। विदितमस्तु देवपादानां, धन-

(क) जयति जयति देवः।

(ख) देव! दृष्टा, पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता।

(ग) देव! अमात्यो विज्ञापयति अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितं, तत् देवः पत्रारोपितं प्रत्यक्षीकरोत्विति।

---

(१४७) स्थिरसौहृदः स्थिरं दृढ़ं सौहृदं प्रणयो यस्य तथाभूतः न अस्य प्रणयभङ्गो जायत इति भावः।

(१४८) अन्तरे मध्ये वर्त्मनि इति शेषः।

(१४९) कार्य्योपरोधं कार्य्यव्याघातम्।

वृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः (१५०) स चानपत्यः (१५१) तस्य चानेककोटिसङ्ख्यं वसु (१५२) तदिदानीं राजस्वताम् (१५३) आपद्यते, इति श्रुत्वा देवः प्रमाणमिति। [सविषादम्]। कष्टं खलु अनपत्यता (१५४) वेत्रवति! महाधनतया बहुपत्नीकेनानेन भवितव्यं, तदन्विष्यतां यदि काचिदापन्नसत्त्वा अस्य (१५५) भार्य्या स्यात्।

प्रती। दाणिं ज्जेव साकेदउरस्स सेट्ठिणो (१५६) दुहिदा णिव्वुत्तपुंसवणा (१५७) तस्स जाआ सुणीअदि (क)।

---

(क) इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते।

(१५०) वारिपथोपजीवी वारिपथः जलपथः तेन उपजीवति वाणिज्येन वर्त्तते इति तथोक्तः। नौव्यसनेन नावः व्यसनं विपत्, जलमज्जनमिति यावत् तेन। विपन्नः मृतः।

(१५१) अनपत्यः निःसन्तानः।

(१५२) वसु धनम्।

(१५३) राजस्वतां राजधनत्वं राजगामित्वम् इत्यर्थः। अत्र अनपत्य इत्यनेन राजपूर्वाधिकारि साकल्यमुपलक्ष्यते सर्वाभावे हरेन्नृप इति स्मरणादिति बोध्यम्।

(१५४) अनपत्यता निरन्वयत्वमिति भावः।

(१५५) आपन्नसत्त्वा गर्भिणी।

(१५६) श्रेष्ठिनः वणिजः।

(१५७) निर्वृत्तपुंसवना निर्वृत्तं सम्पन्नं पुंसवनं गर्भिण्याः तृतीयमासकर्त्तव्यः संस्कारविशेषः यस्याः तादृशी।

राजा। स खलु गर्भः पितुरृक्थमर्हति (१५८) गत्वैवममात्यं ब्रूहि।

प्रती। जं देवो आणवेदि (क)। [इति प्रस्थिता]।

राजा। एहि तावत्।

प्रती। [प्रतिनिवृत्य]। एषाम्हि (ख)।

राजा। किमनेन सन्ततिरस्ति नास्तीति।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्मन्त इति घुष्यताम्॥ (१५९)

प्रती। इदं णाम घोसइदव्वं। [इति निष्क्रम्य पुनः प्रविश्य]। देव! काले पवुट्ठं विअ अहिणन्दिदं (१६०) देवस्स सासणं महाजणेण (ग)।

(क) यद्देव आज्ञापयति।

(ख) एषास्मि।

(ग) एतन्नाम घोषयितव्यम्। देव! काले प्रवृष्टमिव अभिनन्दितं देवस्य शासनं महाजनेन।

(१५८) ऋक्थं धनम्। अर्हति अधिकरोति।

(१५९) येनेति। प्रजाः जनाः; प्रजा स्यात् सन्ततौ जने इत्यमरः। येन येन स्निग्धेन बन्धुना वियुज्यन्ते विरह्यन्ते, पापात् पापीयसः ऋते विना दुष्मन्तः तासां प्रजानां स स बन्धुरिति घुष्यतां प्रख्याप्यताम्। एतेन धनवृद्धिनाम्नो वणिजः परिजनानाम् अहमेव स्वामिकार्य्यं करिष्यामि न ते अनाथत्वदुःखं प्राप्नुवन्त्विति भावः। पथ्यावक्त्रं वृत्तम्।

(१६०) काले समये प्रवृष्टमिव प्रवृष्टं वर्षणमिव। अभिनन्दितं समादृतम्।

राजा । [दीर्घमुष्णञ्च निश्वस्य] । एवं भोः सन्ततिच्छेद-निरवलम्बना (१६१) मूलपुरुषावसाने सम्पदः परम् उपतिष्ठन्ते (१६२) ममाप्यन्ते, पुरुवंशश्रिय एष वृत्तान्तः । (१६३)

प्रती । पडिहदं (१६४) अमङ्गलं (क) ।

राजा । धिङ्मामुपनतश्रेयोऽवमानिनम् । (१६५)

मिश्र । असंसअं पिअसहीं ज्जेव हिअए कदुअ णिन्दिदो अणेण अप्पा (ख) ।

राजा । संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ (१६६)

---

(क) प्रतिहतम् अमङ्गलम् ।

(ख) असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

---

(१६१) सन्ततीति सन्ततीनां सन्तानानां छेदे विरहे निरवलम्बना निराश्रयाः।

(१६२) सम्पदः धनानि परम् अन्यम् उपतिष्ठन्ते आश्रयन्ति ।

(१६३) वृत्तान्तः गतिः ।

(१६४) प्रतिहतं नष्टं भवत्विति शेषः ।

(१६५) उपनतश्रेयोऽवमानिनम् उपनतम् उपस्थितं श्रेयः मङ्गलं शकुन्तलाम् इति भावः अवमन्यते निराकरोतीति तथोक्तम् । धिक् निन्दामीत्यर्थः धिङ्-निर्भर्त्सननिन्दयोरित्यमरः ।

(१६६) संरोपित इति । आत्मनि संरोपिते गर्भरूपेण संप्रवेशितेऽपि आत्मा वै जायते पुत्र इति पतिर्जायां सम्प्रविश्य गर्भो भूत्वेह जायते इति च स्मरणात् कुलप्रतिष्ठा वंशकीर्त्तिरूपा धर्मपत्नी शकुन्तला काले समये उप्तानि निहितानि

मिश्र । अपरिच्चत्ता दाणिं दे भविस्सदि (क) ।

चेटी । [जनान्तिकम्] । अज्जे ! एदं पत्तं पेसअन्तेण किं विआरिदं (१६७) अमच्चेण, पेक्ख दाव भट्टिणो वाह्न-जलप्पवाहो संवुत्तो अधवा ण एसो सोअं बुद्धिपुव्वअं पड़ि-वज्जिस्सदि (१६८) ता मेहच्छन्दागारट्ठिदं णिव्वाणसमत्थं (१६९) अज्जमाधव्वं गेह्णिअ आअच्छ (ख) ।

प्रती । सुट्ठु तुए भणिदं (ग) । [इति निष्क्रान्ता] ।

राजा । अहो ! दुष्मन्तस्य संशयमारूढ़ाः पिण्ड-भाजः । (१७०)

---

(क) अपरित्यक्तेदानीं ते भविष्यति ।

(ख) आर्य्ये ! एतत् पत्रं प्रेषयता किं विचारितम् अमात्येन प्रेक्षस्व तावत् भर्त्तुः वाष्पजलप्रवाहः संवृत्तः, अथवा नैष शोकं बुद्धिपूर्व्वकं परिवर्जयिष्यति तत् मेघच्छन्दागारस्थितं निर्वाणसमर्थम् आर्य्यमाधव्यं गृहीत्वा आगच्छ ।

(ग) सुष्ठु त्वया भणितम् ।

---

बीजानि यस्यां तथाभूता अतएव महते प्रभूताय फलाय फलोत्पत्तये इत्यर्थः कल्पिष्यमाणा सम्भविष्यन्तीत्यर्थः वसुन्धरा पृथिवी इव मया त्यक्ता । उपमालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् ।

(१६७) किं विचारितम् । विचारितं विवेचितं किम् ? न विवेचना कृतेत्यर्थः । बुद्धिपूर्व्वकं स्वबुद्धेरित्यर्थः ।

(१६८) परिवर्जयिष्यति परित्यक्ष्यति ।

(१६९) निर्वाणसमर्थं विनोदनक्षमम् ।

(१७०) संशयम् आरूढ़ाः अतःपरम् अस्माकं पिण्डलोपः भविष्यति इति सन्देहं गता इत्यर्थः । पिण्डभाजः पिण्डं श्राद्धीयमन्नं भजन्ते अश्नन्तीति तथोक्ताः पितर इत्यर्थः ।

कुतः, अस्मात् परं बत यथाश्रुतिसंहितानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥ (१७१)

मिश्र । हद्धी हद्धी, सदि क्खु दीवे ववधाणदोसेण(१७२) अन्धआरं अणुहोदि राएसी (क) ।

चेटी । भट्टा अलं सन्दाविदेण वअस्थो (१७३) ज्जेव पहू अवरासुं देवीसुं अणुरूवपुत्तजम्मेण पुव्वपुरुसाणं अणिणो (१७४) भविस्सदि । [ आत्मगतम् ] । ण मे वअणं पड़ि-

(क) हा धिक् हा धिक्, सति खलु दीपे व्यवधानदोषेण अन्धकारमनुभवति राजर्षिः ।

(१७१) अस्मादिति । अस्मात् दुष्मन्तात् परम् अवसानानन्तरं बत खेदे नः अस्माकं कुले कः जनः यथाश्रुति यथाशास्त्रं संहितानि सम्प्रयुक्तानि निवपनानि पिण्डदानानि श्राद्धानीत्यर्थः पितृदानं निवापः स्यादित्यमरः । करिष्यतीति बुद्ध्वेति शेषः पितरः प्रसूतिविकलेन निरपत्येन मया प्रसिक्तं दत्तमित्यर्थः उदकं तर्पणजलमिति यावत् धौतैः निर्गलितैः अश्रुभिः स्वनयनजलैः सेको यत्र तत् अश्रुसिक्तं यथातथा इत्यर्थः पिबन्ति । वसन्ततिलकं वृत्तम् ।

(१७२) व्यवधानदोषेण आवरणदोषेण ।

(१७३) वयस्थ इति । प्रभुः ईशः वयसि यौवने तिष्ठतीति तथोक्तः । पुत्रोत्पादनसमर्थः इत्यर्थः ।

(१७४) अनृणः ऋणविमुक्तः एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारी च ब्रह्मचर्य्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्य इति श्रवणात् ।

च्छदि, (१७५) अणुरूवंपि ओषधं आदङ्कं णिवत्तेदि (क) । (१७६)

राजा । [शोकनाटितकेन] । (१७७)

आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्ध्ये ।

मय्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः ॥ (१७८)

[इति मोहमुपागतः] ।

चेटी । [ससम्भ्रमम्] । समस्ससदु समस्ससदु भट्टा (ख) ।

मिश्र । किं दाणिं ज्जेव णिव्वुदं (१७९) करेमि ?

अहवा सुदं मए सउन्तलं समस्सन्तीए देवजणणीए (१८०) मुहादो जसभाअसमुस्सुआओ (१८१) देवाओ ज्जेव

(क) भर्त्तः ! अलं सन्तापितेन, वयस्थ एव प्रभुः अपरासु देवीषु अनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो भविष्यति । न मे वचनं प्रतीच्छति अनुरूपमपि औषधमातङ्कं निवर्त्तयति ।

(ख) समाश्वसितु समाश्वसितु भर्त्ता ।

(१७५) प्रतीच्छति गृह्णाति शृणोतीत्यर्थः ।

(१७६) आतङ्कं पीड़ां निवर्त्तयति निवारयति ।

(१७७) शोकनाटितकेन शोकमभिनीयेत्यर्थः ।

(१७८) आमूलेति । आमूलात् आदितः शुद्धा पवित्रा सन्ततिः अपत्यं यस्य तादृशम् एतत् पौरवं कुलं पुरुवंशः सरस्वत्याः नद्याः स्रोत इव प्रवाह इव प्रजावन्ध्ये निरपत्ये अन्यत्र जनशून्ये अनार्य्ये अभद्रे अन्यत्र आर्य्यजातिरहिते देशे इव मयि अस्तमितं विलुप्तम् अन्यत्र शोषं गतम् । उपमालङ्कारः । आर्य्याजातिः ।

(१७९) निर्वृतं सुखितं शकुन्तलाहृत्तान्तख्यापनेनेति शेषः ।

(१८०) देवजनन्याः देवानां मातुरदितेरित्यर्थः ।

(१८१) यज्ञभागसमुत्सुकाः यज्ञाभिलाषिण इत्यर्थः सस्त्रीको धर्म्ममाचरेत् इति शास्त्रात् सस्त्रीकेण राज्ञा दुष्मन्तेन दास्यमानः यज्ञांशस्तामिलेन देवानामेतत् समागमस्य शीघ्रसम्पादनीयत्वमिति भावः ।

तह अणुचिट्ठिस्सन्ति जह सो भट्टा अइरेण धम्मपदिणीं तुमं अहिणन्दिस्सदित्ति, ता ण जुत्तं मे एत्थ विलम्बिदुं जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समस्सासेमि (क)।
[इति उद्भ्रान्तकेन (१८२) निष्क्रान्ता]।

[नेपथ्ये]। भो अव्वह्मण्णं अव्वह्मण्णं (ख)। (१८३)

राजा। [प्रत्यागतचेतनः (१८४) कर्णं दत्त्वा]। अये! माधव्यस्येवार्त्तनादः।

चेटी। सो णाम माधव्वो तवस्सी (१८५) पिङ्गलिआमिस्सिआहिं चेडिआहिं (१८६) चित्तफलअहत्थो (१८७) पाविदो भवे? (ग)।

---

(क) किमिदानीमेव निर्वृतं करोमि? अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या देवजनन्या मुखात् यज्ञभागसमुत्सुका देवा एव तथानुष्ठास्यन्ति यथा स भर्त्ता अचिरेण धर्मपत्नीं त्वामभिनन्दिष्यतीति तन्न युक्तं मेऽत्र विलम्बितुं यावत् अनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि।

(ख) भो अब्रह्मण्यम् अब्रह्मण्यम्।

(ग) स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिः चेटिकाभिः चित्रफलकहस्तः प्राप्तो भवेत्।

---

(१८२) उद्भ्रान्तकेन आकाशगतिविशेषेण।

(१८३) अब्रह्मण्यम् अवध्योक्तिविशेषः ब्राह्मणोऽहं न बध्यः परित्राहि माम् इत्येवं कातरोक्तिरिति यावत् अब्रह्मण्यम् अवध्योक्तौ इत्यमरः।

(१८४) प्रत्यागतचेतनः लब्धसंज्ञः।

(१८५) तपस्वी वराकः।

(१८६) पिङ्गलिकामिश्रिताभिः पिङ्गलिकाप्रभृतिभिः। चेटिकाभिः दासीभिः वसुमत्या इति शेषः।

(१८७) प्राप्तः धृतः।

राजा। चतुरिके! गच्छ मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व। (१८८)

चेटी। [निष्क्रान्ता]।

[नेपथ्ये भूयः स एव शब्दः]।

राजा। परमार्थतो भीतिभिन्नस्वरो (१८९) ब्राह्मणः। कः कोऽत्र भो?

राजा। [प्रविश्य कञ्चुकी]। आज्ञापयतु देवः।

राजा। निरूप्यताम् (१९०) किम् एवं माधव्यब्राह्मणः क्रन्दतीति।

कञ्चु। यावत् अवलोकयामि। [इति निष्क्रम्य ससंभ्रमं पुनः प्रविष्टः]।

राजा। पार्वतायन! न खलु किञ्चिदत्याहितम्? (१९१

कञ्चु। नैवम्।

राजा। ततः कुतोऽयं वेपथुः (१९२)। तथाहि

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः॥ (१९३)

---

(१८८) अनिषिद्धपरिजनाम् अनिवारितचेटिकामित्यर्थः उपालभस्व तिरस्कुरु।

(१८९) परमार्थतः तत्त्वतः। भीतिभिन्नस्वरः भयविपरीतस्वरः।

(१९०) निरूप्यतां दृश्यताम्।

(१९१) अत्याहितम् अमङ्गलम्।

(१९२) वेपथुः गात्रकम्पः तवेति शेषः।

(१९३) प्रागेवेति। प्रागेव पूर्वमेव जरसा वार्द्धक्येन कम्पः अस्तीति शेषः

कञ्चु। परित्रायतां सुहृदं महाराजः।

राजा। कस्मात् परित्रातव्यः ?

कञ्चु। महतः कृच्छ्रात्। (१९४)

राजा। अये ! भिन्नार्थम् (१९५) अभिधीयताम्।

कञ्चु। योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो (१९६) नाम।

राजा। किं तत्र ?

कञ्चु। तस्याग्रभागाद्गृहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यशृङ्गात्।
सखा प्रकाशेतरमूर्त्तिना ते
केनापि सत्त्वेन निगृह्य नीतः॥ (१९७)

सम्प्रति तु सविशेषः अत्यर्थं इत्यर्थः कम्पः मारुतः अश्वत्थमिव सर्वाङ्गं सर्वावयवं तवेति शेषः आविष्करोति व्याप्नोतीति यावत्। उपमालङ्कारः। पथ्यावक्त्रं वृत्तम्।

(१९४) कृच्छ्रात् सङ्कटात्।

(१९५) भिन्नार्थम् उद्घाटिततात्पर्य्यं प्रकाशमित्यर्थः।

(१९६) दिगवलोकनप्रासादः दिशाम् अवलोक्यते व्यापारः अनेनेति दिगवलोकनः स च असौ प्रासादश्चेति तथोक्तः अत्युच्चत्वात् इति भावः अतएव मेघाच्छन्नः मेघैरुपरिगम्यमानत्वात् प्रायेण तथावभासमान इति तथा व्यपदेशः।

(१९७) तस्येति। गृहनीलकण्ठैः गृहपालितमयूरैः अनेकविश्रामेण पुनः पुनः विश्रामेण विलङ्घ्यम् अतिक्रमणीयं शृङ्गं शिखरं यस्य तथाभूतस्य अत्युच्चादिति भावः तस्य मेघच्छन्नप्रासादस्य अग्रभागात् उपरिदेशात् निगृह्य सनिग्रहं गृहीत्वा इत्यर्थः प्रकाशेतरा गूढ़ा अलक्ष्या इत्यर्थः मूर्त्तिर्यस्य तथाभूतेन केनापि सत्त्वेन प्राणिना ते तव सखा नीतः आक्रान्त इत्यर्थः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम्।

राजा । [सहसा उत्थाय] । आः ममापि सत्त्वैः(१९८)अभिभूयन्ते गृहाः (१९९) अथवा बहुप्रत्यवायम् (२००) नृपत्वम् ।

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम् ॥ (२०१)

[नेपथ्ये] । अविधावेहि भो ! अविधावेहि (क) । (२०२)

राजा । [आकर्ण्य गतिभेदं रूपयित्वा] (२०३) । सखे ! न भेतव्यं न भेतव्यम् ।

[नेपथ्ये] । भो ! कधं ण भाइस्सं ? एसो मं कोवि पश्चामोड़िअ सिरोधरं (२०४) इक्खुं विअ भग्गत्थिं करिदुमिच्छदि (ख) ।

---

(क) अभिधाव भो अभिधाव ।

(ख) भोः ! कथं न भेष्यामि ? एष मां कोऽपि प्रत्यामोड्य शिरोधरामिक्षुमिव भग्नास्थिं कर्त्तुमिच्छति ।

---

(१९८) सत्त्वैः भूतैः ।

(१९९) गृहाः गृहस्थिताः परिवारा इत्यर्थः । अभिभूयन्ते आक्रम्यन्ते ।

(२००) बहुप्रत्यवायं बहुविघ्नम् ।

(२०१) अहनीति । अहनि अहनि प्रत्यहम् आत्मन एव स्वस्यैव तावत् प्रमादस्खलितम् अनवधानतया त्रुटितं ज्ञातुं न शक्यम् । प्रजासु मध्ये को जनः केन पथा प्रयाति गच्छति इति एतत् अशेषतः कार्त्स्न्येन ज्ञातुं कस्य प्रभुत्वं शक्तिरस्तीति शेषः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् ।

(२०२) अभिधाव द्रुतम् आगच्छेत्यर्थः ।

(२०३) गतिभेदं गतिभङ्गम् । रूपयित्वा अभिनीय ।

(२०४) प्रत्यामोड्य पश्चात् मोडयित्वा । शिरोधरां ग्रीवाम् ।

राजा। [सदृष्टिक्षेपम्]। धनुर्धनुः।

[प्रविश्य धनुर्हस्ता प्रतीहारी]। जअदु जअदु भट्टा, एदं ससरं सरासणं हत्थावारओ अ (क)। (२०५)

राजा। [सशरं धनुरादत्ते]।

[नेपथ्ये]। एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्मन्तस्तव शरणं भवत्विदानीम्॥ (२०६)

राजा। [सक्रोधम्]। कथं मामेवोद्दिशति। आस्तिष्ठ तिष्ठ कौणपापसद! (२०७) त्वमिदानीं न भवसि। (२०८) [चापमारोप्य]। पार्वतायन! सोपानमार्गमादेशय।

कञ्चु। इत इतो देवः।

[सर्वे सत्वरमुपसर्पन्ति]।

(क) जयति जयति भर्त्ता, एतत् सशरं शरासनं हस्तावारकश्च।

(२०५) हस्तावारकः हस्तरक्षणार्थम् आवरणविशेषः।

(२०६) एष इति। एषः अहं शार्दूलः व्याघ्रः पशुमिव मृगमिव अभिनव-कण्ठशोणितार्थी सन् चेष्टमानं स्पन्दमानं त्वां हन्मि नाशयामि। इदानीम् आर्त्तानां विपन्नानां भयम् अपनेतुम् आत्तं गृहीतं धनुः येन तथाभूतः दुष्मन्तः तव शरणं रक्षिता भवतु। शरणं गृहरक्षित्रोरित्यमरः। उपमालङ्कारः। प्रहर्षिणी वृत्तं, म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयमिति तल्लक्षणात्।

(२०७) कौणपापसद! कौणपं शवम् अदन्तीति कौणपाः प्रेता राक्षसा वा तेषु अपसदः अधमः तत् सम्बुद्धौ।

(२०८) न भवसि न जीवसि।

राजा । [समन्तादवलोक्य] । अये ! शून्यं खलु इदम् ।

[नेपथ्ये] । भो ! परित्ताआहि परित्ताआहि, अहं तुमं पेक्खामि, तुमं मं ण पेक्खसि । मज्जारगहिदो उन्दुरुविअ णिरासोह्मि जीविदे (क) ।

राजा । भोः तिरस्करिणीगर्वित ! (२०९) किम् इदानीं मदीयमस्त्रमपि त्वां न पश्यति ? स्थिरो भव, मा च ते वयस्यसम्पर्कादिश्लेषोऽभूत् (२१०) । एष तमिषुम् (२११) सन्दधे ।

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ (२१२)

[इति शस्त्रं सन्धत्ते] ।

---

(क) भोः परित्रायस्व परित्रायस्व, अहं त्वां प्रेक्षे, त्वं मां न प्रेक्षसे, मार्ज्जारगृहीत उन्दुरुरिव निराशोऽस्मि जीविते ।

(२०९) तिरस्करिणीगर्वित ! तिरस्करिण्या अदृश्यकारिण्या विद्यया गर्वित: अहङ्कृत: तिरस्करिणी प्रभावेणाहं सर्वं पश्यामि न मां कोऽपि पश्यतीति अहङ्कारेण उद्धत इत्यर्थः तत् सम्बोधनम् ।

(२१०) वयस्येति वयस्यस्य माधव्यस्य सम्पर्कात् देहसङ्गात् विश्लेषः विच्छेदः पृथग्भाव इत्यर्थः मा भूत् न भवतु वयस्यं परित्यज्य पृथक् न तिष्ठेति भावः ।

(२११) तम् इषुं शरम् ।

(२१२) य इति । यः शरः वध्यं वधार्हं त्वां हनिष्यति, तथा रक्ष्यं रक्षणीयं द्विजं ब्राह्मणं रक्षिष्यति । हि तथाहि हंसः क्षीरं दुग्धम् आदत्ते गृह्णाति, तन्मिश्राः दुग्धमिश्रिताः अपः जलानि वर्जयति त्यजति । दृष्टान्तालङ्कारः । तथाच दर्पणः । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति । पथ्यावक्त्रं वृत्तम् ।

ततः प्रविशति मातलिर्विदूषकश्च।

मात। आयुष्मन्!

कृताः शरव्यं हरिणा तवासुराः,
शरासनं तेषु विकृष्यतामिदम्।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः॥ (२१३)

राजा। [ससम्भ्रममस्त्रमुपसंहरन्]। अये! मातलिः, स्वागतं देवराजसारथे!

विदू। भो मणस्सिं! (२१४) इमिणा अहं पशुमारणं मारिदुं पविचो (२१५) भवं उण इमं साअदेण अहिण-न्ददि (क)।

मात। [सस्मितम्]। आयुष्मन्! श्रूयताम्, यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः।

(क) भो मनस्विन्! अनेन अहं पशुमारणं मारयितुं प्रवृत्तः, भवान् पुनः इमं स्वागतेन अभिनन्दति।

---

(२१३) कृता इति। हरिणा इन्द्रेण असुराः तव शरव्यं शरलक्ष्यं कृताः शरलक्ष्यत्वेन स्थापिता इत्यर्थः तेषु असुरेषु इदं शरासनं धनुः विकृष्यतां सन्धीयताम्। सतां महात्मनां सुहृज्जने बन्धुवर्गे प्रसादसौम्यानि प्रसन्नतया सुभगानि चक्षूंषि पतन्ति दारुणाः प्राणहरा इति भावः शराः न पतन्तीति शेषः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। वंशस्थविलं वृत्तम्।

(२१४) मनस्विन्! प्रशस्तमनः महाशय इत्यर्थः आक्षेपोक्तिरियम्।

(२१५) पशुमारणं पशुवत् मारणं वधः यत्र तत् यथा तथा मारयितुं हन्तुं प्रवृत्तः आक्रान्त इत्यर्थः।

राजा। अवहितोऽस्मि।

मात। अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः। (१६)

राजा। अस्ति, श्रुतपूर्वो (२१७) मया नारदात्।

मात। सख्युस्ते स किल शतक्रतोरवध्यः

तस्य त्वं रणशिरसि स्मृतो निहन्ता।

उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-

स्तन्नैशं तिमिरमपाकरोति चन्द्रः॥ (२१८)

स भवान् आत्तशस्त्र एव इदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम्। (२१९)

राजा। अनुगृहीतोऽस्मि अनया मघवतः सम्भावनया। अथ (२२०) माधव्यं प्रति भवता किमेवं प्रयुक्तम्? (२२१)

मात। [सस्मितम्]। तदपि कथ्यते, किञ्चिन्निमित्तादपि

---

(२१६) कालनेमिर्नाम असुरः तस्मात् प्रसूतिरुद्भवो यस्य तथाभूतः दुर्जयः जेतुमशक्य इत्यर्थः। नाम सम्भावनायां कालनेमिसन्तानो दानववर्गः दुर्जय इति सम्भाव्यते इत्यर्थः।

(२१७) श्रुतपूर्वः पूर्वं श्रुतः।

(२१८) सख्युरिति। स किल दानवगणः ते तव सख्युः मित्रस्य शतक्रतोः इन्द्रस्य अवध्यः हन्तुमशक्यः। अतः रणशिरसि त्वं तस्य दानवगणस्य निहन्ता स्मृतः निर्णीतः शतक्रतुनेति शेषः। सप्तसप्तिः सप्ताश्वः सूर्य्य इत्यर्थः यत् नैशं तमः उच्छेत्तुं नाशयितुं न प्रभवति न शक्नोति चन्द्रः तत् नैशं तमः अपाकरोति नाशयति। दृष्टान्तालङ्कारः। प्रहर्षिणीवृत्तम्।

(२१९) प्रतिष्ठतां प्रस्थानं कुरुताम्।

(२२०) मघवत इन्द्रस्य। सम्भावनया आज्ञाप्रदानसत्कारेण अथ पक्षान्तरे।

(२२१) प्रयुक्तम् अनुष्ठितम्।

मन:सन्तापादायुष्मान् मया विक्लवो (२२२) दृष्टः, पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः

ज्वलति चलितेन्धनोऽग्निः, विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः ॥ (२२३)

राजा । युक्तमनुष्ठितं भवद्भिः । [विदूषकं प्रति] । वयस्य ! अनतिक्रमणीया दिवस्पते (२२४) राज्ञा, तद्गच्छ, परिगतार्थं (२२५) कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत् प्रतिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः ॥ (२२६)

विदू । जं भवं आणवेदि (क) । [इति निष्क्रान्तः] ।

मात । आयुष्मान् रथमारोहतु ।

[राजा तथा करोति] ।

इति निष्क्रान्ताः सर्वे ।

षष्ठोऽङ्कः ।

---

(क) यद्भवान् आज्ञापयति ।

---

(२२२) विक्लवः अधीर इत्यर्थः ।

(२२३) ज्वलतीति । अग्निः चलितम् इन्धनं काष्ठं यस्य तथाभूतः सन् ज्वलति दीप्यते, पन्नगः सर्पः विप्रकृतः पदादिना ताड़ितः सन् फणां कुरुते फणामुत्तोलयति । तेजस्वी जनः संक्षोभात् सम्यक् क्षोभं विप्रकारं प्राप्येत्यर्थः यवर्थे पञ्चमी । प्रायः प्रायेण तेजः प्रतिपद्यते प्रकाशयति । दृष्टान्तालङ्कारः । आर्य्याजातिः ।

(२२४) दिवस्पतेः स्वर्गाधिपतेः ।

(२२५) परिगतार्थं विदितवृत्तान्तम् ।

(२२६) त्वन्मतिरिति । केवला एकाकिनी तव मतिः बुद्धिः तावत् साकल्येन सम्यक् इत्यर्थः प्रजाः पालयतु । इदम् अधिज्यं युक्तमौर्वीकं धनुः मदीयमिति शेषः अन्यस्मिन् कर्मणि असुरवधरूपे कार्य्ये इति भावः व्यापृतं नियुक्तम् ।

# सप्तमोऽङ्कः

ततः प्रविशति आकाशवर्त्मना रथारूढो राजा मातलिश्च।

राजा। मातले! अनुष्ठितनिदेशोऽपि (१) मघवतः सत्क्रियाविशेषात् (२) अनुपयुक्तमिवात्मानं समर्थये। (३)

मातलिः। [सस्मितम्]। आयुष्मन्! उभयत्राप्यसन्तोषम् अवगच्छ (४) कुतः

उपकृत्य हरेस्तथा भवान्
लघु सत्कारमवेक्ष्य मन्यते।
गणयत्यवदानसम्मितां
भवतः सोऽपि न सत्क्रियामिमाम्॥ (५)

(१) अनुष्ठितनिदेशः कृतादेशः।

(२) सत्क्रियाविशेषात् सम्माननातिशयात्।

(३) समर्थये सम्भावयामि।

(४) असन्तोषम् अपरितोषम्। उभयत्रापि त्वयि इन्द्रे चेत्यर्थः। अवगच्छ विद्धि।

(५) उपकृत्येति। भवान् हरेरिन्द्रस्य तथा तेन प्रकारेण उपकृत्य निदेशम् अनुष्ठायेत्यर्थः दानवजयं कृत्वेति भावः सत्कारं सम्माननाम् इन्द्रकृतमिति शेषः अवेक्ष्य दृष्ट्वा लघु आत्मकृत मानुकूल्यमिति भावः मन्यते सम्भावयति। सोऽपि इन्द्रोऽपि इमां सत्क्रियां भवतः अवदानसम्मितां कृतोपकारसदृशीं न गणयति न मन्यते। सुन्दरीवृत्तम् अयुजोर्यदि सौ जगौ युजोः सभरालौ यदि सुन्दरी तदेति तल्लक्षणात्।

राजा । मातले ! मा मैवं, स खलु मनोरथानामपि दूरवर्त्ती (६) यो विसर्जनावसरे सत्कारः । मम हि दिवौकसां (७) समक्षमर्द्धासनोपवेशितस्य

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ (८)

मात । किमिव न आयुष्मान् अमरेश्वरादर्हति । पश्य

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेशरिणश्च पुरा नखैः ॥ (९)

(६) मनोरथानामपि दूरवर्त्ती आशातीत इति यावत् विसर्जनावसरे प्रस्थापनसमये ।

(७) दिवौकसां देवानाम् ।

(८) अन्तर्गतेति । अन्तर्गता प्रार्थना मालाग्रहणाभिलाषो यस्य तथाभूतम् अन्तिकस्थं समीपवर्त्तिनं जयन्तं स्वपुत्रम् उद्वीक्ष्य दृष्ट्वा तदभिप्रायं ज्ञात्वापि इत्यर्थः कृतं स्मितम् ईषत् हास्यं येन तथाभूतेन सता हरिणा इन्द्रेण आमृष्टः उत्सादितः वक्षसः उरस्थलस्य हरिचन्दनमेव अङ्कः चिह्नं यया तादृशी स्वोरस्थलस्थितेति भावः मन्दारमाला देवतरुविशेषपुष्पस्रक् पिनद्धा परिधापिता मत्कण्ठे इति शेषः । पुत्रमपि अविगणय्य मत्सम्भावनं कृतमिति भावः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् ।

(९) सुखपरस्येति । सुखपरस्य सुखासक्तस्य न किञ्चित् कठिनं कर्म्म कुर्वत इति भावः हरेरिन्द्रस्य त्रिदिवं स्वर्गः अधुना नतपर्वभिः आनतग्रन्थिभिः तव शरैः,

राजा। तत्र खलु शतक्रतोरेव महिमा। पश्य

सिध्यन्ति कर्म्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम्।
किं प्राभविष्यदरुणस्तमसां वधाय
तञ्चेत् सहस्रकिरणो धुरि नाकरिष्यत्॥ (१०)

मातलिः। सदृशं तवैवत् (११)। [स्तोकमन्तरमतीत्य]।
आयुष्मन्! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यम् (१२) आत्मयशसः।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु।
सञ्चिन्त्य गीतिक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति॥ (१३)

---

तथा पुरा पूर्वं पुरुषकेशरिणः नृसिंहस्य नखैः एतदुभयैः उद्धृता दानवा एव कण्टकाः यस्मात् तथाभूतं निरुपद्रवमित्यर्थः कृतम्। द्रुतविलम्बितं वृत्तम्।

(१०) सिध्यन्तीति। नियोज्याः भृत्या महत्स्वपि कर्म्मसु यत् सिद्धान्ति कृतकार्य्या भवन्ति, तम् ईश्वराणां प्रभूणां सम्भावनागुणं प्रभावमाहात्म्यम् अवेहि जानीहि। अरुणः सूर्य्यसारथिः तमसाम् अन्धकाराणां वधाय निराकरणाय किं प्राभविष्यत् प्रभुरभविष्यत् नैव इत्यर्थः चेत् यदि सहस्रकिरणः सूर्य्यः तम् अरुणं धुरि अग्रे न अकरिष्यत्। तमोनाशे यथा सहस्रकिरणप्रभावेण तत्सारथेः सिद्धिः तथा अस्माकमपि शत्रुजये इन्द्रस्य एव माहात्म्येन सिद्धिरिति निष्कर्षः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। वसन्ततिलकं वृत्तम्।

(११) सदृशं युक्तं तव एतत् कथनमिति शेषः।

(१२) नाकपृष्ठप्रतिष्ठितस्य स्वर्गपरिवर्त्तिनः। सौभाग्यं सुभगत्वं रमणीयत्वम् इत्यर्थः।

(१३) विच्छित्तिशेषैरिति। अमी दिवौकसः देवाः गीतिक्षमं सङ्गीतयोग्यम्

राजा । मातले ! असुरसंप्रहारोत्सुकेन पूर्वेद्युः (१४) दिवमधिरोहता न लक्षितो(१५)ऽयं प्रदेशो मया तत्कत-मस्मिन् पथि वर्त्तामहे मरुताम् ? । (१६)

मात । त्रिस्रोतसं वहति यो गगनप्रतिष्ठां,
ज्योतींषि वर्त्तयति चक्रविभक्तरश्मिः ।
तस्य व्यपेतरजसः प्रवहस्य वायोः
मार्गो द्वितीयहरिविक्रमपूत एषः (१७)

राजा । अतः खलु (१८) मे सवाह्यान्तःकरणोऽन्तरात्मा

अर्थवन्धम् अभिधेयरचनां सञ्चिन्त्य विभाव्य कल्पलतांशुकेषु कल्पतरुलम्बितवसनेषु सुरसुन्दरीणां विच्छित्तिशेषैः अङ्गरागावशिष्टैः वर्णैः रञ्जनसाधनैः रक्तपीतादिभिः तव चरितं कीर्त्तिं लिखन्ति चित्रयन्तीत्यर्थः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् ।

(१४) असुरसम्प्रहारोत्सुकेन असुरैः सह यः सम्प्रहारः युद्धं तस्मिन् उत्सुकेन अभिनिविष्टवतेत्यर्थः । पूर्वेद्युः पूर्वस्मिन् दिवसे ।

(१५) न लक्षितः न सम्यक् दृष्ट इत्यर्थः ।

(१६) मरुतां वायूनां वा पथि आकाशे इति यावत् ।

(१७) त्रिस्रोतसमिति । यः गगने अन्तरीक्षे प्रतिष्ठा स्थितिर्यस्याः तां त्रिस्रोतसं मन्दाकिनीमित्यर्थः वहति धारयति, तथा चक्रेण ज्योतिषां मण्डलेन विभक्ताः विभज्य स्थापिताः रश्मयः किरणाः यत्र तथाभूतः सन् नानाज्योतिषां नानारश्मित्वात् विभागेन व्यवस्थितिरिति बोध्यम् । ज्योतींषि ग्रहनक्षत्रादीनि वर्त्तयति चालयति वहति वा । व्यपगतं विगतं रजः धूलिर्येन तथाभूतस्य प्रवहस्य तदाख्यस्य तस्य वायोः द्वितीयः यः हरेर्वामनरूपिणः विष्णोर्विक्रमः पदक्रमः तेन पूतः पवित्रीकृतः एष मार्गः पन्थाः । वसन्ततिलकं वृत्तम् ।

(१८) अतः खलु अतएव ।

(१९) प्रसीदति। [रथाङ्गमवलोक्य]। शङ्के मेघपदवीमवतीर्णाः स्मः।

मात। आयुष्मन्! कथम् अवगम्यते?

राजा। अयमगविवरेभ्यश्चातकैर्निष्पतद्भि-

हरिभिरचिरभासां तेजसा चानुलिप्तैः।

गतमुपरि घनानां वारिगर्भोदराणां

पिशुनयति रथस्ते शीकरक्लिन्ननेमिः॥ (२०)

मात। अथ किं, क्षणादायुष्मान् स्वाधिकारभूमौ वर्त्तिष्यते।

राजा। [अधोऽवलोक्य]। मातले! वेगादवतरणात् आश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,

पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।

सन्तानं तनुभावनष्टसलिलव्यक्त्या व्रजन्त्यापगाः,

केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते॥ (२१)

(१९) सबाह्यान्तःकरणः बाह्यैः करणैः इन्द्रियैः हस्तपदादिभिः अन्तःकरणैः अन्तरिन्द्रियैः मनोबुद्ध्यादिभिः सहितः। अन्तरात्मा जीवात्मा।

(२०) अयमिति। अयं ते तव रथः शीकरैः अम्बुकणैः क्लिन्ना आर्द्रीकृता नेमयः चक्रप्रान्तदेशा यस्य तथाभूतः चक्रप्रान्ते प्रधिर्नेमिरित्यमरः। तथा अगविवरेभ्यः पर्वतगह्वरेभ्यः निष्पतद्भिः निर्गच्छद्भिः चातकैः पक्षिविशेषैः हरिभिः रथयोजितैः अश्वैश्च अचिरभासां विद्युतां तेजसा अनुलिप्तैश्च सद्भिः वारिगर्भोदराणां जलपूर्णानामित्यर्थः घनानां मेघानाम् उपरि गतं गमनं पिशुनयति सूचयति। मालिनीवृत्तम्। काव्यलिङ्गमलङ्कारः।

(२१) शैलानामिति। उन्मज्जताम् उत्पततां शैलानां पर्वतानां शिखरात्

मात । आयुष्मन्! साधु दृष्टम् । [सबहुमानमालोक्य]। अहो ! उदाररमणीया (२२) पृथिवी ।

राजा । मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढ़ः कनकरसनिष्यन्दी सान्ध्य (२३) इव मेघः सानुमान् (२४) आलोक्यते ?

मात । आयुष्मन् ! एष खलु हेमकूटो नाम किम्पुरुष-पर्वतः परं (२५) तपस्विनां क्षेत्रम् । (२६)

शृङ्गात् मेदिनी अवरोहतीव अवनमतीव। पादपाः तरवः स्कन्धानां काण्डानाम् उदयात् प्रकाशात् पर्णानां पत्राणाम् अभ्यन्तरेषु लीनताम् अलक्ष्यतामिति यावत् विजहति त्यजन्ति प्राक् पत्रैरलक्षिताः क्रमशः काण्डशाखादिविभागतः लक्ष्यन्ते इति भावः । आपगाः नद्यः तनुभावेषु अल्पपरिसरेषु नष्टस्य अदर्शनं गतस्य इत्यर्थः सलिलस्य व्यक्त्या प्रकाशेन सन्धानं संयोगं व्रजन्ति प्राप्नुवन्ति। अतः केनापि जनेन उत्-क्षिपतेव ऊर्द्ध्वक्षेपणं कुर्वतेव भुवनं जगत् पृथ्वीत्यर्थः मत्पार्श्वे मम समीपम् आनीयते प्रेष्यते पश्य अवलोकय। अत्र स्वभावोक्त्यनुप्राणितोत्प्रेक्षालङ्कारः। स्वभावोक्ति-लक्षणमुक्तं दर्पणे। स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनमिति। शार्दूल-विक्रीड़ितं वृत्तम् ।

(२२) उदाररमणीया अतिरमणीया।

(२३) पूर्वापरसमुद्रावगाढ़ः पूर्वापरौ सागरौ अवगाह्य स्थित इत्यर्थः। कनक-रसनिष्यन्दी सुवर्णद्रवस्रावी। सान्ध्यः सन्ध्याकालीनः।

(२४) सानुमान् पर्वतः।

(२५) हेमकूटो नाम हेमकाञ्चनमयमित्यर्थः कूटं शृङ्गं यस्य तथाभूतः तन्नाम्ना प्रसिद्ध इत्यर्थः। किम्पुरुषपर्वतः किन्नराणामधिवासत्वात् तदाख्यः। परं महत्।

(२६) क्षेत्रं स्थानम्।

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति ॥ (२७)

राजा । [सादरम्] । तेन हि अनतिक्रमणीयानि श्रेयांसि (२८) प्रदक्षिणीकृत्य भगवन्तं गन्तुम्(२९)इच्छामि ।

मात । आयुष्मन् ! प्रथमः कल्पः (३०) । [अवतरणं नाटयन्] । एतौ (३१) अवतीर्णौ स्वः ।

राजा । [सविस्मयम्] । मातले !

उपोढशब्दा न रथाङ्गनेमयः,
प्रवर्त्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ॥ (३२)

(२७) स्वायम्भुवादिति । स्वायम्भुवात् स्वयम्भूः ब्रह्मा तस्य अपत्यं पुमान् स्वायम्भुवः तस्मात् । मरीचेः यः प्रजापतिः विधाता प्रबभूव सुराणाम् असुराणाञ्च गुरुः पिता सः कश्यप इत्यर्थः सपत्नीकः सभार्य्यः सन् अस्मिन् हेमकूटे तपस्यति तपश्चरति । पथ्यावक्त्रं वृत्तम् ।

(२८) अनतिक्रमणीयानि अलङ्घनीयानीत्यर्थः । श्रेयांसि मङ्गलानि ।

(२९) गन्तुं लब्धुम् ।

(३०) प्रथमः मुख्यः कल्पः विधिः अनुष्ठानमित्यर्थः ।

(३१) नाटयन् अभिनयन् । एतौ आवामिति शेषः ।

(३२) उपोढेति । अभूतलस्पर्शतया असृष्टभूतलतयेत्यर्थः रथाङ्गानां चक्राणां नेमयः प्रान्तभागाः न उपोढः गृहीतः शब्दः यैः तथाभूताः निःशब्दा इत्यर्थः । रजश्च रेणुश्च प्रवर्त्तमानम् उड्डयमानं न च दृश्यते । निर्गता निवृत्ता उद्धतिरौद्धत्यम् उत्समीचस्पर्शजनितं चाञ्चल्यमिति यावत् यस्य तथाभूतः तव रथः अवतीर्णोऽपि न लक्ष्यते अवतरन्निति नानुमीयते इत्यर्थः । वंशस्थविलं वृत्तम् ।

मात। एतावानेव शतमन्योः (३३) आयुष्मतश्च रथस्य विशेषः।

राजा। मातले ! कतमस्मिन् प्रदेशे मारीचाश्रमः ?

मात। [हस्तेन दर्शयन्]। पश्य

वल्मीकार्द्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः।
अंसव्यापि शकुन्तनीड़निचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः॥ (३४)

राजा। [विलोक्य]। नमोऽस्मै कष्टतपसे। (३५)

मात। [संयतप्रग्रहं (३६) रथं कृत्वा]। एतावददितिपरिवर्द्धितमन्दारवृक्षं (३७) प्रजापतेराश्रमं प्रविष्टौ स्वः।

---

(३३) शतमन्योः शतं मन्यवः यज्ञा यस्य सः तस्य। मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः।

(३४) वल्मीकेति। यत्र आश्रमे असौ मुनिर्मारीचः वल्मीकेषु तदाख्यकीटविशेषोत्थापितमृत्तिकास्वित्यर्थः अर्द्धनिमग्ना मूर्त्तिर्यस्य तथाभूतः दीर्घकालिकतपःप्रसङ्गेन एकस्थाने निश्चलतया स्थितत्वात् तथाभूत इति भावः उरगत्वक् भुजगनिर्मोक एव ब्रह्मसूत्रान्तरं यज्ञोपवीतभेदः यस्य तादृशः कण्ठे जीर्णं शुष्कं यत् लताप्रतानवलयं वल्लिप्रचयमण्डलं तेन अत्यर्थम् अतिशयेन इत्यर्थः सम्पीड़ितः सम्यक् आड़ित इत्यर्थः अंसव्यापि स्कन्धलम्बि शकुन्तानां पक्षिणां नीड़ैः कुलायैः आवासैः इत्यर्थः कुलायो नीड़मस्त्रियामित्यमरः। जटामण्डलं बिभ्रत् दधानः अतएव अचलः निश्चलः स्थाणुरिव शाखापत्रादिवर्जिततरुरिव अर्कबिम्बं सूर्य्यमण्डलम् अभि अभिलक्ष्येत्यर्थः स्थितः। उपमालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्।

(३५) कष्टतपसे कष्टं कठिनं तपो यस्य तस्मै ऋषये।

(३६) संयतप्रग्रहं धृतरश्मिम्।

(३७) अदितिर्देवजननी तया परिवर्द्धिता मन्दारवृक्षा देवतरुविशेषा यस्मिन् तथोक्तम्।

राजा । अहो ! स्वर्गात् इदमधिकतरं निर्वृतिस्थानम् (३८) अमृतह्रदमिव अवगाढोऽस्मि ।

मातलि । [रथं स्थापयित्वा] । अवतरतु आयुष्मान् ।

राजा । [अवतीर्य्य] । भवान् किमिदानीम् ?

मातलि । संयमयन्त्रित (३९) एवायमास्ते रथः तद्वयमपि अवतरामः । [तथाकृत्वा] । इत इत आयुष्मन् ! दृश्यन्ताम् अत्रभवतामृषीणां तपोवनभूमयः ।

राजा । ननु विस्मयात् उभयमपि अवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ (४०)

(३८) निर्वृतिस्थानं सुखस्थानम् ।

(३९) संयमयन्त्रितः संयमेन व्यवस्थया यावद्वयं न प्रत्यावर्त्तामहे तावदत्रैव तिष्ठेति नियमेन इति भावः यन्त्रितः निरुद्धः ।

(४०) प्राणानामिति । अन्ये मुनयः तपोभिः यद् स्वर्गादिकं स्थानं वाञ्छन्ति अभिलषन्ति, अमी मुनयः तस्मिन् तपस्यन्ति तपश्चरन्ति तथाहि सन्तः विद्यमानाः कल्पवृक्षा यस्मिन् तादृशे वने अनिलेन वायुना प्राणानां वृत्तिः जीवनयात्रा उचिता अभ्यस्ता, सञ्चितफलप्रसवकारिवृक्षसत्त्वेऽपि वायुभक्षणेन जीवन्तः तपस्यन्तीति भावः, काञ्चनपद्मरेणुभिः कपिशे पिञ्जरे तोये सलिले पुण्याभिषेकक्रिया विशुद्धावगाहनव्यापारः रत्नशिलागृहेषु मणिमयपाषाणसद्मसु ध्यानं समाधिः, तथा विबुधस्त्रीणां सुरसुन्दरीणां सन्निधौ संयम इन्द्रियवशीकरणम् । शार्दूलविक्रीडित वृत्तम् ।

मातः । उत्सर्पिणी (४१) खलु महतां प्रार्थना । [परिक्रम्य आकाशे] । वृद्धशाकल्य ! किं व्यापारः (४२) सम्प्रति भगवान् मारीचः ?

[आकर्ण्य] । किं ब्रवीषि? दाक्षायण्या (४३) पतिव्रतापुण्यम् अधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीगणसहितायै कथयतीति, तत् प्रतिपाल्यावसरः (४४) खलु प्रस्तावः (४५) । [राजानमवलोक्य] । अस्यामशोकच्छायायां तावदास्ताम् आयुष्मान्, यावत् त्वामहम् इन्द्रगुरवे (४६) निवेदयामि ।

राजा । यथा भवान् मन्यते । [इति स्थितः] ।

[मातलिर्निष्क्रान्तः] ।

राजा । [निमित्तं सूचयित्वा] । (४७)

मनोरथाय नाशंसे किं बाहो ! स्पन्दसे मुधा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्त्तते ॥ (४८)

(४१) उत्सर्पिणी मह्योन्नता ।

(४२) किंव्यापारः किमाचारः कस्मिन् कार्य्ये रत इत्यर्थः ।

(४३) दाक्षायण्या दक्षस्य अपत्यं स्त्री दाक्षायणी अदितिः तया ।

(४४) तत् तस्मात् प्रतिपाल्यावसरः प्रतीक्षणीयसमयः ।

(४५) प्रस्तावः प्रसङ्गः साक्षात्करणेन प्रदक्षिणीकरणरूप इति यावत् ।

(४६) इन्द्रगुरवे इन्द्रस्य गुरुः पिता तस्मै कश्यपायेत्यर्थः ।

(४७) निमित्तं सुलक्षणविशेषम् । सूचयित्वा अभिनीयेत्यर्थः ।

(४८) मनोरथायेति । हे बाहो ! मनोरथाय अभीष्टलाभाय न आशंसे न आशां करोमि, किं कथं मुधा व्यर्थं स्पन्दसे स्फुरसि । हि यतः पूर्वम् अवधीरितम् अवज्ञातं परित्यक्तमित्यर्थः श्रेयः मङ्गलं दुःखं परिवर्त्तते परिणमति । पथ्यावक्त्रं वृत्तम् ।

[नेपथ्ये] । मा क्खु चवलदं करेहि जहिं तहिं ज्जेव अत्तणो पइदिं दंसेसि ? (क) ।

राजा । [कर्णं दत्त्वा] । अभूमिरियम् अविनयस्य (४९) तत् को नु खलु एवं निषिध्यते (५०) । [शब्दानुसारेणाव-लोक्य सविस्मयम्] । अये ! को नु खलु अयमवरुध्यमानः (५१) तापसीभ्यामबालसत्त्वो बालः । (५२)

अर्द्धपीतस्तनं मातुरामर्दक्लिष्टकेशरम् ।
प्रक्रीड़ितुं सिंहशिशुं करेणैवावकर्षति ॥ (५३)

ततः प्रविशति यथानिर्दिष्टकर्मा तापसीभ्यां सह बालः ।

बालः । जिम्भ (५४) ले सिंहसावआ ! जिम्भ, दन्ताइं दे गणइस्सं (ख) ।

---

(क) मा खलु चपलतां कुरु, यत्र तत्र एव आत्मनः प्रकृतिं दर्शयसि ।

(ख) जृम्भस्व रे सिंहशावक ! जृम्भस्व, दन्तांस्ते गणयिष्यामि ।

(४९) अभूमिरयोग्यस्थानम् । अविनयस्य अशिष्टाचारस्य ।

(५०) निषिध्यते निवार्य्यते ।

(५१) अवरुध्यमानः निरुध्यमानः ।

(५२) अबालसत्त्वः अबालस्य यून इत्यर्थः सत्त्वमिव सत्त्वं बलं यस्य तथाभूतः महाबल इत्यर्थः । बालः शिशुः ।

(५३) अर्द्धपीतेति । मातुः सिंह्याः अर्द्धं पीतौ स्तनौ येन तथोक्तम् आमर्देन क्लिष्टाः खस्ताः केशराः सटा यस्य तादृशं सिंहशिशुं प्रक्रीड़ितुं करेण एव अव-कर्षति आकर्षति । पथ्यावक्त्रं वृत्तम् ।

(५४) जृम्भस्व मुखं विस्तारयेत्यर्थः ।

प्रथमा । अविणीद ! किं णो अपच्चणिव्विसेसाइं सत्ताइं विप्पअरेसि (५५) हन्त वड्ढइ विअ दे संरम्भो (५६) ठाणे क्खु इसिजणेण सव्वदमणो (५७) त्ति किदणामहेओसि (क) ।

राजा । किं नु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे हृदयम् । [विचिन्त्य] । नूनम् अनपत्यता (५८) मां वत्सलयति । (५९)

द्वितीया । एसा तुमं केसरिणी (६०) लङ्घइस्सदि जइ से पुत्तअं ण मुञ्चिस्सदि (ख) ।

बालः । [सस्मितम्] । अह्महे ! बलिअं क्खु भीदह्मि (ग) [इति अधरं दर्शयति] ।

राजा । [सविस्मयम्] ।

---

(क) अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ? हन्त वर्द्धत इव ते संरम्भः, स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

(ख) एषा त्वां केशरिणी लङ्घयिष्यति यद्यस्याः पुत्रकं न मोक्ष्यसि ।

(ग) अहो ! बलीयः खलु भीतोऽस्मि ।

---

(५५) अपत्यनिर्विशेषाणि पुत्राभिन्नानि । विप्रकरोषि उत्पीड़यसि ।

(५६) संरम्भः क्रोधः ।

(५७) सर्वदमनः सर्वान् प्राणिनः दमयतीति तथोक्तः ।

(५८) अनपत्यता अपुत्रता ।

(५९) वत्सलयति स्नेहयति ।

(६०) केशरिणी सिंही ।

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोऽपेक्ष इव स्थितः ॥ (६१)

प्रथमा । वच्छ ! एदं सुञ्च, बालमइन्दअं अवरं दे कीलणअं दाइस्सं (क) ।

बालः । कहिं ? देहि णं (ख) । [इति हस्तं प्रसारयति]

राजा । [बालस्य हस्तं दृष्ट्वा] । कथं चक्रवर्त्तिलक्षणम् (६२) अपि अनेन धार्य्यते ।

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ (६३)

---

(क) वत्स ! एवं मुञ्च, बालमृगेन्द्रकम् अपरं ते क्रीड़नकं दास्यामि ।

(ख) कुत्र ? देहि एतत् ।

---

(६१) महत इति । अयं बालः शिशुः स्फुलिङ्गावस्थया अग्निकणरूपेण स्थितः एधोऽपेक्षः एधांसि इन्धनानि काष्ठं दार्विन्धनं त्वेध इध्ममेध इत्यमरः । अपेक्षते इति तथाभूतः वह्निरिव महतः तेजसः प्रभावस्य बीजं कारणं मे मम प्रतिभाति । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ।

(६२) चक्रवर्त्तिलक्षणं चक्रवर्त्तिनः सम्राजः लक्षणं चिह्नम् ।

(६३) प्रलोभ्येति । प्रलोभ्यस्य लोभनीयस्य वस्तुनः क्रीड़नकस्य प्रणयेन प्रार्थनया प्रसारितः विस्तारितः जालं गवाक्षविवरमिव अङ्गुलिविवरं तेन ग्रथिता संयुता इत्यर्थः अङ्गुलयो यस्य तथाभूतः करः इद्धरागया आताम्रयेत्यर्थः नवोषसा नवेन उषसा प्रत्यूषेण भिन्नं विकासितम् अलक्ष्याणि अदृश्यानि सम्पूर्णालोकविरहादिति भावः पत्रान्तराणि दलभिदा यस्य तथाभूतम् एकमद्वितीयम् एकमात्रमित्यर्थः पङ्कजमिव विभाति राजते । उपमालङ्कारः । वंशस्थविलं वृत्तम् ।

द्वितीया । सुव्वदे! मुञ्च णं, ण एसो सक्को वाआमेत्तेण समइदुं ता गच्छ मम केरए उड़ए सङ्कोचणस्स इसिकुमारस्स वरणचित्तिदो मट्टिआमोरओ चिट्ठदि, तं से उवहर (क)।

प्रथमा । तह (ख) । [इति निष्क्रान्ता] ।

बालः । दाव इमिणा ज्जेव कीलिस्सं (ग)

तापसी । [विलोक्य हसन्ती] । णं मुञ्च णं (घ)

राजा । स्पृहयामि खलु दुर्ललिताय अस्मै (६४) । [निश्वस्य]

> आलक्ष्यदन्तमुकुलाननिमित्तहासैः
> अव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
> अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
> धन्यास्तदङ्गरजसा कलुषीभवन्ति ॥ (६५)

(क) सुव्रते ! मुञ्चैनं, नैष शक्यो वाङ्मात्रेण शमयितुं, तद्गच्छ मदीये उटजे सङ्कोचनस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर।

(ख) तथा ।

(ग) तावदनेनैव क्रीड़िष्यामि ।

(घ) ननु मुञ्चैनम् ।

(६४) दुर्ललिताय दुर्विनीताय ।

(६५). आलक्ष्येति । धन्या भाग्यवन्तः जनाः अनिमित्ता आकस्मिका हासा हास्यानि तैः आलक्ष्याणि सम्यक् दृश्यानि दन्तानां मुकुलानि अङ्कुरा येषां तान् अव्यक्ता अस्फुटा वर्णाः तैः रमणीया वचसां वाक्यानां प्रवृत्तिः उच्चारणं येषां तथोक्तान् तथा अङ्कः क्रोड़ एव आश्रयः स्थानं तत्प्रणयिनः तनयान् पुत्रान् वहन्तः सन्तः तेषां पुत्राणाम् अङ्गरजसा गात्ररेणुना कलुषीभवन्ति मलिनीभवन्ति। परुषीभवन्तीति पाठे स एवार्थः। स्वभावोक्तिरलङ्कारः। वसन्ततिलकं वृत्तम् ।

तापसी । [साङ्गुलितर्जनम्] । भो ! ण मं गणेसि ? [पार्श्वमवलोक्य] । को एत्थ इसिकुमारआणं ? [राजानं दृष्ट्वा] । भद्दमुह ! एहि दाव मोआवेदि इमिणा दुम्मोच्च-हत्थग्गहेण डिम्बएण बाधीअमाणं बालमइन्दअं (क) । (६६)

राजा । तथा [इति उपगम्य सस्मितम्] । अयि भो महर्षिपुत्रक !

एवमाश्रमविरुद्धवृत्तिना संयमी किमिति जन्मदस्त्वया ।
सत्त्वसंश्रयगुणोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः ॥ (६७)

तापसी । भद्दमुह ! ण क्खु एसो इसिकुमारओ (ख) ।

राजा । आकारसदृशं चेष्टितम् (६८) एवास्य कथयति

(क) भो ! न मां गणयसि ? कोऽत्र ऋषिकुमाराणाम् ! भद्रमुख ! एहि तावत् मोचय अनेन दुर्मोच्यहस्तग्रहेण डिम्भकेन बाध्यमानं बालमृगेन्द्रकम् ।

(ख) भद्रमुख ! न खलु एष ऋषिकुमारः ।

(६६) दुर्मोच्यहस्तग्रहेण दुर्मोच्यः दुःखेन मोचनीयः हस्तस्य ग्रहः ग्रहणं यस्य तथोक्तेन । डिम्भकेन बालकेन । पोतः पाकोऽर्भको डिम्भ इत्यमरः । बाध्यमानं पीड्यमानम् । बालमृगेन्द्रं सिंहशावकम् ।

(६७) एवमिति । कृष्णसर्पशिशुना चन्दन इव आश्रमस्य तपोवनस्य विरुद्धा विरोधिनी प्रतिकूलेत्यर्थः वृत्तिर्व्यवहारो यस्य तादृशेन त्वया संयमी तापसः जन्मदः जनकः पितेत्यर्थः तवेति शेषः सत्त्वसंश्रयगुणोऽपि सत्त्वगुणावलम्बी अपीत्यर्थः किमिति कथम् एवम् अनेन प्रकारेण प्राणिपीडनरूपतमोगुणप्रकटनेनेति भावः दूष्यते दूषितः क्रियते मोचितमिदं जीवहिंसावर्जितमहर्षिसुतस्य तवेति भावः । उपमालङ्कारः । उद्धताहत्तम् । रौ नरौ लगौ रथोद्धतेति तल्लक्षणात् ।

(६८) आकारसदृशम् आकारेण अवयवेन सदृशं चेष्टितं कर्म ।

स्थानप्रत्ययात् (६९) तु वयमेवं तर्किणः। [यथाभ्यर्थितम् (७०)मनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य। स्वगतम्]।

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रे सुखिता ममैवम्।
कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्यायमङ्गात्कृतिनः प्रसूतः॥ (७१)

तापसी। [उभौ विलोक्य]। अच्चरीअं अच्चरीअं (क)।

राजा। आर्य्ये! किमिव?

तापसी। इमस्स बालअस्स असम्बद्धे (७२) बि भद्दमुहे संवादिणी (७३) आकिदि त्ति विह्मिदह्मि, अविअ वामसीलो (७४) वि भविअ अवरिचिदस्सबि दे वअणेण पदूदित्थो संवुत्तो (ख)।

---

(क) आश्चर्य्यम् आश्चर्य्यम्।

(ख) अस्य बालकस्य असम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मितास्मि, अपि च वामशीलोऽपि भूत्वा अपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः।

---

(६९) कथयति नायम् ऋषिकुमार इति सूचयतीत्यर्थः। स्थानस्य तपःसेवस्य प्रत्ययात् विश्वासात्।

(७०) तर्किणः अनुमायिनः। यथाभ्यर्थितं यथा मृगेन्द्रशिशुमोचनार्थं साहाय्याय प्रार्थितं तदनुसारेणेत्यर्थः।

(७१) अनेनेति। कस्यापि कुलाङ्कुरेण वंशप्ररोहेण अनेन बालेन गात्रे स्पृष्टस्य मम एवं सुखिता सुखित्वं भवतीति शेषः। यस्य कृतिनः पुण्यवतः अङ्गात् अयं शिशुः प्रसूतः उत्पन्नः तस्य चेतसि कां निर्वृतिं सुखं कुर्यात् अयं शिशुः स्पृष्टः सन्निति शेषः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजाति वृत्तम्।

(७२) असम्बद्धे सम्बन्धरहिते।

(७३) संवादिनी सदृशी।

(७४) वामशीलः प्रतिकूलस्वभावः दुर्विनीत इत्यर्थः।

राजा। [बालकमुपलालयन्]। आर्य्ये! न चेन्मुनि-कुमारोऽयं तत्कोऽस्य व्यपदेशः ?। (७५)

तापसी। पोरवोत्ति (क)।

राजा। [स्वगतम्]। कथम् एकान्ववायो(७६)ऽयम् अस्माकम्। अतः खलु मदनुकारिणम् एनम् अत्रभवती मन्यते। अस्ति एतत् पौरवाणामन्त्यं कुलव्रतम् (७७)। [प्रकाशम्]।

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकयतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम्॥ (७८)

कथं पुनरात्मगत्या (७९) मानुषाणामेष विषयः ?

तापसी। जधा भद्दमुहो भणादि, किन्तु अच्छरासम्ब-

---

(क) पौरव इति।

(७५) अस्य शिशोः व्यपदेशः कुलम्।

(७६) एकान्ववायः एकवंशः वंशोऽन्ववायः सन्तान इत्यमरः।

(७७) अन्त्यं चरमम्। कुलव्रतं वंशाचारः।

(७८) भवनेष्विति। पूर्वं ये पौरवा इति शेषः सुधासितेषु सुधाधवलेषु भवनेषु निवासम् उशन्ति कामयन्ते निवसन्तीत्यर्थः। पश्चात् चरमे वयसीत्यर्थः तेषां पौरवाणां नियतैकयतिव्रतानि नियतं सततम् एकं केवलं यतिव्रतं येषु तथाविधानि तरुमूलानि गृहीभवन्ति गृहाणि भवन्ति चरमे वयसि पौरवाः यतिव्रतमाश्रित्य तपोवनमधितिष्ठन्तीति निष्कर्षः।

(७९) आत्मगत्या पादचारेणेति यावत् विमानं विना नात्रागन्तुं शक्यते इति भावः।

न्धेण उण इमस्स बालअस्स जणणी इधज्जेव देवगुरुणो तवोवणे पसूदा (क)।

राजा। [स्वगतम्]। हन्त! द्वितीयमिदम् आशाजननम्। [प्रकाशम्]। अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी?

तापसी। को तस्स धम्मदारपरिच्चाइणो णामं कीत्तइस्सदि (ख)।

राजा। [स्वगतम्]। कथम् इयं कथा मामेव लक्षीकरोति। यावत् अस्य शिशोर्मातरं नामतः पृच्छेयम्। [विचिन्त्य]। अथवा अनार्य्यः (८०) खलु परदारपृच्छाव्यापारः। (८१)

[प्रविश्य मृण्मयूरहस्ता तापसी]। सव्वदमण! पेक्ख सउन्तलावण्णं (ग)। (८२)

बालः। [सदृष्टिक्षेपम्]। कहिं सा मे अम्बा? (घ)।

उभे। [प्रहसतः]।

(क) यथा भद्रमुखो भणति, किन्तु अप्सरसःसम्बन्धेन पुनरस्य बालकस्य जननी इहैव देवगुरोस्तपोवने प्रसूता।

(ख) कस्तस्य धर्मदारपरित्यागिनो नाम कीर्त्तयिष्यति।

(ग) सर्वदमन! प्रेक्षस्व शकुन्तलावण्यम्।

(घ) कुत्र सा मे अम्बा?

(८०) अनार्य्यः अभद्रः अनुचित इत्यर्थः।

(८१) परदारपृच्छाव्यापारः परस्त्रीप्रश्नप्रसङ्गः।

(८२) शकुन्तलावण्यं पक्षिसौन्दर्य्यम्।

प्रथमा। णामसादिस्सेण उवच्छन्दिदो (८३) मादिवच्छलो (क)।

द्वितीया। इमस्स मोरस्स रमणीअदं पेक्खस्सत्ति भणिदोसि (ख)।

राजा। [स्वगतम्]। किं शकुन्तलेत्यस्य मातुराख्या? अथवा सन्ति पुनर्नामधेयसादृश्यानि, अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते?।

बालः। अन्तिए! रोअदि मे चडुलके एवे मउलके (ग) [इति क्रीड़नकमादत्ते]।

प्रथमा। [विलोक्य सावेगम्]। अम्मो! रक्खाकाण्डओ (८४) से मणिबन्धे (८५) ण दीसदि (घ)।

राजा। आर्य्ये! अलम् आवेगेन, ननु अयमस्य सिंहशावकस्य विमर्दात् परिभ्रष्टः, [इति आदातुमिच्छति]।

उभे। मा क्खु, मा क्खु, एदं [विलोक्य]। कधं गहिदो ज्जेव? (ङ)। [विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः]।

राजा। किमर्थं भवतीभ्यां प्रतिषिद्धोऽस्मि?

(क) नामसादृश्येन उपच्छन्दितो मातृवत्सलः।

(ख) अस्य मयूरस्य रमणीयतां पश्येति भणितोऽसि।

(ग) अन्तिके! रोचते मे चटुलक एष मयूरः।

(घ) अहो! रक्षाकाण्डोऽस्य मणिबन्धे न दृश्यते।

(ङ) मा खलु मा खलु एतम्।

---

(८३) उपच्छन्दितः प्रलोभितः।

(८४) रक्षाकाण्डः रक्षार्थमाबद्धः सूत्रविशेषः।

(८५) मणिबन्धे करमूले।

प्रथमा। सुणादु महाभाओ, एसा महाप्पहावा अवरा-जिदा णाम सुरमहोसही इमस्स दारअस्स जादकम्मसमए भअवदा मारीएण दिण्णा, एदं किल मादापिदरो अप्पाणञ्च वज्जिअ अवरो भूमिपडिदं ण गेह्लादि (क)।

राजा। अथ गृह्णाति ?

प्रथमा। तदो सप्पो भविअ तं दंसइ (ख)।

राजा। भवतीभ्यां कदाचित् अन्यत्र प्रत्यक्षीकृतम् इदम्।

उभे। अणेअसो (ग)।

राजा। [सहर्षमात्मगतम्]। तत् किं खलु इदानीं पूर्णम् आत्मनो मनोरथं नाभिनन्दामि [इति बालकं परिष्वजते]।

द्वितीया। सुव्वदे ! एहि इमं वुत्तन्तं णिअमवावुदाए (८६) सउन्तलाए णिवेदेह्म (घ)। [इति निष्क्रान्ते]।

बालः। मुञ्च मं मुञ्च मं, अम्बाए सआसं गमिस्सं (ङ)।

राजा। पुत्र ! मया एव सह मातरमभिनन्दयिष्यति।

---

(क) शृणोतु महाभागः, एषा महाप्रभावा अपराजिता नाम सुरमहौषधी, अस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता, एतां किल मातापितरौ आत्मानञ्च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति।

(ख) ततः सर्पो भूत्वा तं दशति।

(ग) अनेकशः।

(घ) सुव्रते ! एहि इमं वृत्तान्तं नियमव्यापृतायाः शकुन्तलाया निवेदयावः।

(ङ) मुञ्च मां मुञ्च माम्, अम्बायाः सकाशं गमिष्यामि।

---

(८६) नियमव्यापृतायाः प्रोषितभर्तृव्रतनिरतायाः इत्यर्थः।

बालः । दुस्सन्तो मम तादो ण क्खु तुमं (क) ।

राजा । एष विवाद एव मां प्रत्याययति ।

ततः प्रविशति एकवेणीधरा शकुन्तला ।

शकु । [सवितर्कम्] । विआरकालेऽवि पइदित्थं (८७) सव्वदमणस्स ओसहिं सुणिअ ण मे आसंसो अत्तणो भाअधेएसुं, अधवा जधा मिस्सकेसीए मे आचक्खिदं तधा सम्भावीअदि एदं (ख) । [इति परिक्रामति] ।

राजा । [शकुन्तलां विलोक्य सहर्षखेदम्] । अये ! सा इयम् अत्रभवती शकुन्तला ।

वसने परिधूसरे वसाना, नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति ॥
(८८)

शकु । [पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम्] । ण

(क) दुष्मन्तो मम तातो न खलु त्वम् ।

(ख) विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्य ओषधीं श्रुत्वा न मे आशंसा आत्मनो भागधेयेषु अथवा यथा मिश्रकेश्या मे आख्यातं तथा सम्भाव्यते एतत् ।

(८७) विकारकाले रक्षाकाण्डस्य वैपरीत्यभावसमये इत्यर्थः । प्रकृतिस्थां स्वभावस्थितां न तु सर्पभूतामिति भावः ।

(८८) वसने इति । परिधूसरे अतिमलिने वसने वसाना आच्छादयन्ती वस आच्छादने इत्यस्मात् शानच्प्रत्ययः । नियमेन व्रतेन उपवासादिना क्षाममुखी शुष्कवदना । धृता एकवेणिर्यया तथोक्ता एकवेणीधरं शिर इति प्रवासस्थपतिकाया नियमादिति भावः । तथा शुद्धं निर्दोषं शीलं चरितं यस्यास्तथाभूता सती अतिनिष्करुणस्य अतिनिर्दयस्य मम दीर्घं विरहव्रतं बिभर्त्ति धारयति ।

क्खु अज्जउत्तो अअं, ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ? (क)।

बालः। [मातरमुपगम्य]। अम्ब ! को एसो मं पुत्त-केत्ति ससिणेहं आलिङ्गदि ? (ख)।

राजा। प्रिये ! क्रौर्य्यम् (८९) अपि मे त्वयि प्रयुक्तम् अनुकूलपरिणामं (९०) संवृत्तम्। तत् अहमिदानीं त्वया प्रत्यभिज्ञातम् (९१) आत्मानमिच्छामि।

शकु। [स्वगतम्]। हिअअ ! समस्सस समस्सस, पहरिअ परिच्चत्तमच्छरेण अणुकम्पिदह्मि (९२) देव्वेण, अज्जउत्तो ज्जेव एसो (ग)।

राजा। प्रिये !

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि !।
उपरागान्ते शशिनः समुपगता रोहिणी योगम्॥ (९३)

(क) न खलु आर्य्यपुत्रोऽयं, तत्क एष कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?

(ख) अम्ब ! क एष मां पुत्रक इति सस्नेहम् आलिङ्गति ?

(ग) हृदय ! समाश्वसिहि समाश्वसिहि, प्रहृत्य परित्यक्तमत्सरेण अनुकम्पितास्मि दैवेन, आर्य्यपुत्र एवैषः।

---

(८९) क्रौर्य्यं निष्ठुरता।

(९०) अनुकूलपरिणामम् अनुकूलः सुखजनकः परिणामः परिपाको यस्य तथाभूतम्।

(९१) प्रत्यभिज्ञातं परिचितम्।

(९२) प्रहृत्य प्रहारं कृत्वा परित्यक्तमत्सरेण त्यक्तक्रोधेन। अनुकम्पिता अनुगृहीता।

(९३) स्मृतीति। हे सुमुखि ! त्वं दिष्ट्या भाग्येन स्मृत्या स्मरणेन भिन्नं नाशितं मोह एव तमः अन्धकारं यस्य तादृशस्य मे मम प्रमुखे सम्मुखे स्थिता

शकु । [सहर्षम्] । जअदु जअदु अज्जउत्तो (क) । [इति अर्द्धोक्ते बाष्पसन्नकण्ठी (८४) विरमति] ।

राजा । प्रिये !

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ (८५)

बालः । अम्ब ! को एसो ? (ख) ।

शकु । भाअधेआइं पुच्छ (ग) । [इति रोदिति] ।

राजा ।

सुतनु ! हृदयात् प्रत्यादेशव्यलीक मपैतु ते,
किमपि मनसः सम्मोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः,
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ (८६)

[इति पादयोः पतति] ।

(क) जयति जयति आर्य्यपुत्रः ।

(ख) अम्ब ! क एषः ?

(ग) भागधेयानि पृच्छ ।

अभि । तथाहि शशिनश्चन्द्रस्य उपरागान्ते ग्रासावसाने रोहिणी योगं समुपगता भवतीति शेषः । दृष्टान्तालङ्कारः । आर्य्याजातिः ।

(८४) बाष्पसन्नकण्ठी अश्रुजलावरुद्धकण्ठी ।

(८५) बाष्पेणेति । यत् यतः ते तव असंस्कारम् अलक्तकादिसंस्कारवर्जितम् अथ च पाटलं स्वभावरक्तम् ओष्ठपुटं यस्य तादृशं मुखं दृष्टं तस्मात् जयशब्दे बाष्पेण प्रतिरुद्धेऽपि मया जितम् ।

(८६) सुतन्विति । हे सुतनु शुभाङ्गि ! ते तव हृदयात् प्रत्यादेशव्यलीकं परित्यागदुःखम् अपैतु अपगच्छतु । तदा मे मम किमपि अनिर्वचनीयमिति भावः मनसः बलवान् सम्मोहः अभूत् । हि तथाहि प्रबलतमसां मोहान्धानाम्

शकु। जयेदु जयेदु अज्जउत्तो, णूणं मे सुहप्पडिबन्धअं पुराकिदं तेसु दिअसेसु परिणामसुहं आसी जेण साणुक्कोसोवि अज्जउत्तो मइ विरसो संवुत्तो (क)।

राजा। [उत्तिष्ठति]।

शकु। अध कधं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो? (ख)।

राजा। उद्धृतविषादशल्यः कथयिष्यामि।

मोहान्मया सुतनु! पूर्वमुपेक्षितस्ते
यो वाष्पविन्दुरधरं परिबाधमानः।
तन्तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते! प्रमृज्य विगतानुशयो भवामि॥ (९७)

[इति यथोक्तं करोति]।

शकु। [प्रमृष्टवाष्पा अङ्गुरीयकं विलोक्य]। अज्जउत्त! तं एदं अङ्गुलीअअं? (ग)।

(क) जयतु जयतु आर्य्यपुत्रः, नूनं मे सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामसुखमासीत् येन सानुक्रोशोऽपि आर्य्यपुत्रो मयि विरसः संवृत्तः।

(ख) अथ कथम् आर्य्यपुत्रेण स्मृतो दुःखभागी अयं जनः?

(ग) आर्य्यपुत्र! तदिदमङ्गुरीयकम?

---

इत्यर्थः शुभेषु मङ्गलेषु विषयेषु एवंप्रायाः एवंविधाः वृत्तयः व्यवहारा भवन्तीति शेषः, अन्धः चक्षुर्विकलो जनः शिरसि क्षिप्तां केनापि पातितां स्रजमपि मालामपि अहिशङ्कया सर्पभ्रमेण धुनोति परितः क्षिपति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। हरिणीवृत्तम्।

(९७) मोहादिति। हे सुतनु शुभाङ्गि! मया मोहात् अज्ञानात् ते तव अधरं परिबाधमानः पीडयन् यः वाष्पविन्दुः पूर्वं प्रत्याख्यानसमये उपेक्षितः अगणित इति यावत् हे कान्ते! आकुटिलेषु ईषद्वक्रेषु पक्ष्मसु नेत्रलोमसु विलग्नं तं वाष्पविन्दुं तावत् साकल्येन प्रमृज्य अपनीय अद्य विगतानुशयः गतसन्तापः भवामि। वसन्ततिलकं वृत्तम्।

राजा। अथ किम् अस्मादद्भुतोपलम्भात् (९८) मया स्मृति: उपलब्धा।

शकु। विसमं (९९) किदं क्खु इमिणा, जं तदा अज्ज-उत्तस्स पच्चाअणकाले (१००) दुल्लहं आसी (क)।

राजा। तेन हि, ऋतुसमागमचिह्नं प्रतिपद्यतां लता कुसुमम्।

शकु। ण से विस्ससेमि, अज्जउत्तो ज्जेव णं धारेदु (ख)

तत: प्रविशति मातलि:।

मात। दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्द्धते।

राजा। सुहृत्सम्पादितत्वात् (१०१) साधुतरफलो मे मनोरथ:, मातले! न खलु विदितोऽयमाखण्डलस्य (१०२) अर्थ: ?

मात। [सस्मितम्]। किमीश्वराणां परोक्षम्? (१०३) एहि, भगवान् मारीचस्ते दर्शनमिच्छति।

(क) विषमं कृतं खलु अनेन, यत्तदा आर्य्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत्।

(ख) नास्य विश्वसिमि, आर्य्यपुत्र एवैनं धारयतु।

(९८) अद्भुतोपलम्भात् अद्भुत: विस्मयजनक: उपलम्भ: प्राप्तिर्लाभ: यस्य तथाभूतात्।

(९९) विषमं निष्ठुरं नृशंसमिति यावत्।

(१००) प्रत्यायनकाले विश्वासोपगमनसमये।

(१०१) सुहृत्सम्पादितत्वात् सुहृदा इन्द्रेण त्वया वा सम्पादितत्वात् संघटितत्वात्।

(१०२) आखण्डलस्य इन्द्रस्य।

(१०३) परोक्षम् अप्रत्यक्षं सर्वान्तर्यामित्वादिति भाव:।

राजा । प्रिये ! अवलम्ब्यतां पुत्रः, त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकु । लज्जेमि क्खु अज्जउत्तेण सह्नं गुरुअणसमीवं गन्तुं (क) ।

राजा । आचरितव्यमेतत् अभ्युदयकालेषु, तदेहि तावत् ।

इति सर्वे परिक्रामन्ति ।

ततः प्रविशति अदित्या सह आसनोपविष्टो मारीचः ।

मारीचः । [राजानमवलोक्य] । दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्मन्त इत्यभिहितो भुवनस्य भर्त्ता ।
चापेन यस्य विनिवर्त्तितकर्म जातं
तत्कोटिमत् कुलिशमाभरणं मघोनः ॥ (१०४)

अदितिः । सम्भावणीअप्पहावा(१०५)से आकिदी(ख) ।

मारीचः । आयुष्मन् ! एतौ पुत्रप्रीतिपिशुनेन (१०६)

---

(क) लज्जे खलु आर्य्यपुत्रेण सार्द्धं गुरुजनसमीपं गन्तुम् ।

(ख) सम्भावनीयप्रभावास्याकृतिः ।

---

(१०४) पुत्रस्येति । दुष्मन्त इति अभिहितः प्रथितः भुवनस्य पृथिव्या भर्त्ता अधिपतिरयं ते तव पुत्रस्य इन्द्रस्य रणशिरसि संग्रामाग्रे अग्रयायी अग्रेसरः सेनानीरित्यर्थः । यस्य दुष्मन्तस्य चापेन धनुषा विनिवर्त्तितं निष्पादितं कर्म शत्रुपराजयरूपं यस्य तथाभूतं तत् प्रसिद्धं कोटिमत् तीक्ष्णाग्रं मघोन इन्द्रस्य कुलिशं वज्रम् आभरणम् अलङ्करणं जातम् । शत्रुपराजये नास्य प्रयोजनमिति भावः । वसन्ततिलकं वृत्तम् । काव्यलिङ्गमलङ्कारः ।

(१०५) सम्भावनीयप्रभावा अनुमेयप्रभुशक्तिः ।

(१०६) पुत्रप्रीतिपिशुनेन पुत्रप्रीतिसूचकेन ।

चक्षुषा दिवौकसां पितरौ (१०७) आयुष्मन्तम् अवलोकयतः, तदुपसर्प (१०८)।

राजा। मातले!

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्त्तारं भुवनत्रयस्य सुषुवे यद् यज्ञभागेश्वरम्।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं,
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम्॥(१०९)

मातलिः। अथ किम्।

राजा। [प्रणिपत्य]। उभाभ्यामपि वां वासवनियोज्यो (११०) दुष्मन्तः प्रणमति।

मारीचः। वत्स! चिरं जीवन् पृथिवीं पालय।

अदितिः। अप्पडिरधो (१११) होहि (क)।

(क) अप्रतिरथो भव।

(१०७) दिवौकसां देवानां पितरौ जननीजनकौ।

(१०८) उपसर्प समीपं गच्छ।

(१०९) प्राहुरिति। मुनयः द्वादशधा स्थितस्य तेजसः सूर्य्यस्येति यावत् द्वादशात्मा दिवाकर इति शास्त्रात्। यत् द्वन्द्वं कारणं प्रभवं प्राहुः कीर्त्तयन्ति इत्यर्थः। यत् द्वन्द्वं भुवनत्रयस्य भर्त्तारम् अधिपतिं यज्ञभागेश्वरं देवराजं सुषुवे जनयामास, यस्मिन् द्वन्द्वे आत्मभुवः ब्रह्मणोऽपि परः श्रेष्ठः पुरुषः विष्णुरित्यर्थः भवाय जन्मने आस्पदम् आश्रयं चक्रे वामनरूपेणेति भावः। दक्षमरीचिसम्भवः [illegible]कन्या अदितिः मरीचिपुत्रः कश्यप इति दक्षमरीचिभ्यां सम्भवः उत्पत्तिर्यस्य तयोस्तं स्रष्टुर्विधातुः एकान्तरम् एकपुरुषव्यवधानं तत् प्रसिद्धम् इदं दृश्यमानं द्वन्द्वं युगलम्। शार्दूलविक्रीड़ितं वृत्तम्।

(११०) वासवनियोज्यः इन्द्रदासः।

(१११) अप्रतिरथः अप्रतिद्वन्द्वः।

शकुन्तला पुत्रसहिता पादयोः पतति ।

मारीचः । वत्से !

आखण्डलसमो भर्त्ता, जयन्तप्रतिमः सुतः ।

आशीरन्या न ते योग्या, पौलोमीमङ्गला भव ॥ (११२)

अदितिः । जादे ! भत्तुणो बहुमदा होहि, अअञ्च दीहाऊ उहअपक्खं अलङ्करेदु, एध उवविसध (क) ।

सर्वे प्रजापतिमभित उपविशन्ति ।

मारीचः । [एकैकं निर्दिशन्] ।

दिष्ट्या शकुन्तला साध्वी, सदपत्यमिदं, भवान् ।

श्रद्धा, वित्तं, विधिश्चेति त्रितयं तत् समागतम् ॥ (११३)

राजा । भगवन् ! प्राक् अभिप्रेतसिद्धिः (११४) पश्चात् दर्शनमित्यपू[illegible] (११५) ख[illegible]ोऽनुग्रहः । कु[illegible]

(क) जाते ! भर्त्तुर्बहुमता भव, अयञ्च दीर्घायुरुभयपक्षम् अलङ्करोतु, एत उपविशत ।

---

(११२) आखण्डलेति । भर्त्ता आखण्डलेन इन्द्रेण समः सदृशः । सुतः पुत्रः जयन्तप्रतिमः जयन्ततुल्यः । अतः ते अन्या आशीः न योग्या न उचिता, त्वं पौलोमी शची तस्या मङ्गलमिव मङ्गलं सौभाग्यरूपं यस्यास्तादृशी भव । पथ्यावक्त्रं वृत्तम् ।

(११३) दिष्ट्येति । दिष्ट्या भाग्येन साध्वी [illegible]व्रता शकुन्तला, सत् उत्कृष्टम् अपत्यं पुत्रः तथा भवान् श्रद्धा वित्तं धनं विधिश्च इति तत् त्रितयं समागतं मिलितम् ।

(११४) अभिप्रेतसिद्धिः इष्टलाभः ।

(११५) अपूर्वः आश्चर्यः ।

उदेति पूर्वं कुसुमं, ततः फलं,
घनोदयः प्राक्, तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः॥ (११६)

मात। आयुष्मन्! एवं प्रसीदन्ति विश्वगुरवः।

राजा। भगवन्! इमाम् आज्ञाकरीं वो गान्धर्वेण विवाहविधिना उपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन् (११७) अपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य, पश्चादेनाम् अङ्गुरीयकदर्शनादूढ़पूर्वाम् अवगतोऽहं, तच्चित्रमिव मे प्रतिभाति।

यथा गजे साधु समक्षरूपे
त[illegible]स्मिन्नपि क्रामति संशयः स्यात्
पदानि दृष्ट्वाच भवेत् प्रतीतिः
तथाविधो मे मनसो विकारः॥ (११८)

---

(११६) उदेतीति। पूर्वं कुसुमम् उदेति विकसति, ततः फलं जायते इति शेषः, प्राक् पूर्वं घनस्य मेघस्य उदयः, तदनन्तरं घनोदयानन्तरं पयः वृष्टिः भवतीति शेषः। अयं निमित्तनैमित्तिकयोः कार्य्यकारणयोः क्रमः नियमः, सम्पदस्तु तव प्रसादस्य पुरः अग्रे सम्भूता इति शेषः। आशिषोऽनन्तरं सम्पदो लाभस्यैव नियमः, भवतस्तु [illegible] एतद् वैलक्षण्यं यत् शकुन्तलारूपसम्पद् लब्धा पश्चात् आशीः [illegible] इति भावः। वंशस्थविलं वृत्तम्। कार्य्यकारणयोः पौर्वापर्य्यव्यत्ययरूपातिशयोक्तिरलङ्कारः। सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते इति।

(११७) स्मृतिशैथिल्यात् स्मृतिभ्रंशात्। प्रत्यादिशन् परित्यजन्।

(११८) यथेति। साधु सम्यक् यथा तथा समक्षं प्रत्यक्षं रूपं यस्य तथोक्ते

मारीचः । वत्स ! अलम् आत्मापराधशङ्कया, सम्मोहो (११९)ऽपि त्वयि उपपन्न एव, श्रूयताम् ।

राजा । अवहितोऽस्मि ।

मारीचः । यदैव अप्सरस्तीर्थावतरणात् प्रत्याख्यान-विक्लवां शकुन्तलामादाय दाक्षायणीम् उपगता मेनका तदैव ध्यानात् अवगतवृत्तान्तोऽस्मि, दुर्वाससः शापात् इयं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा, स च अङ्गु-रीयदर्शनावसानः शाप इति ।

राजा । [सोच्छ्वासमात्मगतम्] । एष वचनीयात् (१२०) मुक्तोऽस्मि ।

शकु । [स्वगतम्] । दिट्ठिआ अकारणपच्चादेसी ण अज्ज-उत्तो, ण उण सत्तं (१२१) अत्ताणं सुमरेमि, अधवा ण सुदो सुणहिअआए मए अअं सावो, जदो सहीहिं अच्चा अरेण सन्दिट्ठम्हि, सो राआ जइ तुमं ण सुमरेदि तदा एदं अङ्गुलीअअं दंसेसिन्ति (क) ।

(क) दिष्ट्या अकारणप्रत्यादेशी न आर्य्यपुत्रः, न पुनः शप्तमात्मानं स्मरामि

कांश्चिदपि गजे अतिक्रामति दृष्टिपथात् चलति सति संशयः गजोऽयं आगतः नवेति सन्देहः यथा स्यात् अथ संशयानन्तरं पदानि पदचिह्नानि दृष्ट्वा प्रतीतिः विश्वासः सन्देहनिराकरणमित्यर्थः भवेत्, मे मम तथाविधः मनसः विकारः आसीत् इति शेषः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तम् ।

(११९) सम्मोहः स्मृतिभ्रंशः ।

(१२०) वचनीयात् अपवादात् अकारणपरित्यागरूपादिति भावः ।

(१२१) शप्तम् अभिसम्पातितम् ।

मारीचः । [शकुन्तलां विलोक्य] । वत्से ! विदितार्थासि, तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः (१२२) करणीयः । पश्य

शापादसि प्रतिहता स्मृतिलोपरूक्षे
भर्त्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ (१२३)

राजा । यथाह भगवान् ।

मारीचः । वत्स ! कच्चिदभिनन्दितः त्वया अस्माभिः विधिवदनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ?

राजा । भगवन् ! अत्र खलु मे वंशप्रतिष्ठा । [इति बालकं हस्तेन गृह्णाति] ।

मारीचः । भाविनं चक्रवर्त्तिनम् एनम् अवगच्छतु भवान् पश्यतु

---

अथवा न श्रुत: शून्यहृदयया मया अयं शाप: यतः, सखीभ्याम् अत्यादरेण सन्दिष्टास्मि, स राजा यदि त्वां न स्मरिष्यति तदा एतत् अङ्गुरीयकं दर्शयिष्यसीति ।

(१२२) मन्युः कोपः ।

(१२३) शापादिति । शापात् हेतोः स्मृतिलोपेन स्मृतिभ्रंशेन रूक्षे नृशंसे स्वामिनि सति प्रतिहता निराकृता असि, सम्प्रति अपेततमसि अपगतमोहे भर्त्तरि सति तवैव प्रभुता प्रभावः । मलेन उपहतः विलुप्तः प्रसादः नैर्मल्यं यस्य तादृशे दर्पणतले आदर्शबिम्बे छाया न मूर्च्छति न प्रविशति न पततीत्यर्थः । शुद्धे निर्मले तु सुलभः सुप्रवेशः अवकाशः यस्याः तथाविधा भवतीति शेषः । दृष्टान्तालङ्कारः । वसन्ततिलकं वृत्तम् ।

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः

पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।

इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः,

पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ (१२४)

राजा । भगवत्कृतसंस्कारेऽस्मिन् सर्वमाशंसे । (१२५)

अदितिः । इमाए दुहिदिमणोरहसम्पत्तीए कण्णो दाव सुदवित्थारो करीअदु, दुहिदिवच्छला मेणआ उण इध मं परिअरन्ती सण्णिहिदा ज्जेव (क) ।

शकु । [आत्मगतम्] । मणोगदं मे वाहरिदं (१२६) भअवदीए (ख) ।

मारीचः । तपःप्रभावात् सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य ।

(क) अस्या दुहितृमनोरथसम्पत्तेः कण्वस्तावत् श्रुतविस्तारः क्रियताम्, दुहितृवत्सला मेनका पुनरिह मां परिचरन्ती सन्निहितैव ।

(ख) मनोगतं व्याहृतं भगवत्या ।

(१२४) रथेनेति । अयं ते पुत्रः अनुद्घातेन उद्घातराहित्येन भूतलस्पर्शाभावादस्खलनेनेति भावः स्तिमिता निश्चला स्थिरेत्यर्थः गतिर्यस्य तादृशेन रथेन तीर्णः अतिक्रान्तः जलधिः समुद्रो येन तथाभूतः तथा अप्रतिरथः प्रतिपक्षरहितः सन् सप्तद्वीपां वसुधां पुरा जयति जेष्यतीत्यर्थः निकटागामिके पुरेत्यमरः । अत्र पुरायोगे भविष्यदर्थे लट् । इह अस्मिन् आश्रमे सत्त्वानां प्राणिनां सिंहादीनां प्रसभेन बलात्कारेण दमनात् सर्वदमन इति पुनः पश्चात् लोकस्य जगतः भरणात् प्रतिपालनात् भरत इति आख्यां संज्ञां यास्यति प्राप्स्यति । शिखरिणीवृत्तम् ।

(१२५) आशंसे आशां करोमि ।

(१२६) व्याहृतम् उक्तम् ।

राजा। अतः खलु मम अनतिक्रुद्धो मुनिः।

मारीचः। तथापि असौ दुहितुः सपुत्राया पत्या परिग्रहप्रियम् अस्माभिः श्रावयितव्यः। कः कोऽत्र भोः!

[प्रविश्य शिष्यः]। भगवन्! अयमस्मि।

मारीचः। वत्स गालव! मद्वचनात् इदानीमेव वैहायस्या (१२७) गत्वा तत्रभवते कण्वाय प्रियम् आवेदय, तथा पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुष्मन्तेन परिगृहीतेति।

शिष्यः। यथाज्ञापयन्ति गुरव [इति निष्क्रान्तः]।

मारीचः। [राजानं प्रति]। वत्स! त्वमपि सापत्यदारः (१२८) सख्युराखण्डलस्य रथम् आरुह्य स्वां राजधानीं प्रतिष्ठस्व।

राजा। [सप्रणामम्]। यत् आज्ञापयति भगवान्।

मारीचः। सम्प्रति हि

> तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु,
> त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।
> युगशतपरिवृत्तैरेवमन्योन्यकृत्यैः
> नयतमुभयलोकानुग्रहश्लाघनीयैः॥ (१२९)

राजा। भगवन्! यथाशक्ति श्रेयसे यतिष्ये।

---

(१२७) वैहायस्या आकाशचारिण्या।

(१२८) सापत्यदारः पुत्रकलत्रसहितः।

(१२९) तवेति। विडौजाः इन्द्रः तव प्रजासु प्राज्या प्रभूता वृष्टिर्यस्य तथाभूतः भवतु सम्यक् वृष्टिवर्षणेन प्रजाः आप्याययतु। त्वमपि विततः विस्तृतः

मारीचः। वत्स! किं ते भूयः प्रियम् उपहरामि?।

राजा। अतः परमपि प्रियमस्ति? तथापि एतदस्तु।

भरतवाक्यम्।

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः,
सरस्वती श्रुतिमहती न हीयताम्।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः॥ (१२०)

इति निष्क्रान्ताः सर्वे।

इति सप्तमोऽङ्कः।

समाप्तमिदं महाकविश्रीकालिदासविरचितमभिज्ञान-
शकुन्तलनामकं नाटकम्।

---

यशो येन तथोक्तः सन् वज्रिणम् इन्द्रम् अलम् अत्यर्थं प्रीणय प्रीतिं कुरु। युग-शतपरिवर्त्तैः युगशतं व्याप्य परिवर्त्तैः विनिर्मितैः एवम् एवम्प्रकारैः उभयलोकानुग्रहश्लाघनीयैः उभयोर्लोकयोः द्यावापृथिव्योरित्यर्थः अनुग्रहेण श्लाघनीयैः प्रशंसनीयैः अन्योन्यकृत्यैः परस्परकार्य्यैः जयतं त्वम् इन्द्रश्च युवामिति शेषः। शालिनीवृत्तम्।

(१२०) प्रवर्त्ततामिति। पार्थिवः राजा प्रकृतीनां प्रजानां हिताय शुभसाधनाय प्रवर्त्ततां प्रवृत्तो भवतु। श्रुतिभिर्वेदैर्महती महनीयेत्यर्थः सरस्वती वाणी न हीयतां न नश्यतु। परिगता शक्तिः महिमा येन तथा अथवा शक्तिः प्रकृतिर्येन तथाभूतः सर्वशक्तिमानित्यर्थः आत्मना स्वयं भवतीति आत्मभूः नीललोहितः शम्भुः ममापि पुनर्भवं पुनर्जन्म क्षपयतु नाशयतु संसारबन्धनात् मां मोचयत्विति निष्कर्षः। रुचिरावृत्तं जभौ सजौ गितिरुचिरा चतुर्ग्रहैरिति तल्लक्षणात्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
शकुन्तलाव्याख्या समाप्ता।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent Free Sanskrit College Calcutta.,*